# संस्कृतामृतम्

## ( शोध लेखों का संग्रह )

**डॉ. प्रमोदिनी पण्डा**

एम.ए., एम.एड., आचार्य (वेद)

विद्यावारिधि (पी-एच.डी.)

विद्यावाचस्पति (डी.लिट्)




**चौखम्भा भारती अकादमी**

वाराणसी

संस्कृतामृतम्

ISBN 978-93-84541-83-5



प्रकाशक

**चौखम्भा भारती अकादमी**

आकर ग्रन्थों के प्रकाशक एवं वितरक

'गोकुल भवन', के. ३७/१०९, गोपाल मन्दिर लेन

वाराणसी-२२१००१ (भारत)

फोन : ०५४२-२३३०३४५, २३३०३४९

e-mail : cbavns@gmail.com





प्रथम संस्करण : सन् २०१८

मूल्य : ₹ 325/-

मुद्रक :

**श्रीजी प्रिण्टर्स**

नाटी इमली, वाराणसी

**प्रो. यदुनाथ प्रसाद दुबे**
कुलपति



सम्पूर्णानन्द संस्कृत विश्वविद्यालय,
वाराणसी।

दिनांक : १५.५.१८

# पुरोवाक्

को भेदो ज्ञानविज्ञानयोरिति स्पष्टमुल्लिखितमस्ति अमरकोषे—**मोक्षे धीर्ज्ञानम्।** अर्थात् मोक्षफलिका धीर्ज्ञानम्। तत्पुनः मोक्षोपयोगिबुद्धेः। अन्यत्र **विज्ञानं शिल्पशास्त्रयोः।** अन्यफलिता शिल्पे शास्त्रे च या धीः सा विज्ञानम्। सुतरां ब्रह्मविद्याजिज्ञासैव ज्ञानम्। शिल्पज्ञानं मोक्षेऽनुपयोगात्। मुक्तिः कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतम्।

वेदोपबृंहकं पुराणेष्वन्यतमं विष्णुपुराणं वक्ति—

**तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये।**
**आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्।।**

विष्णु. १।१९।४१

एतच्छास्त्ररहस्यं यदि संक्षेपेण ब्रूमस्तर्हि ब्रह्मज्ञानपरकं शास्त्रं परा जीवनोपयोगिशास्त्रमपरेति। मनुष्याणां कृते उभे विद्ये आवश्यके। जीवनयात्रार्थं शिल्पविद्या निःश्रेयसे ब्रह्मविद्या च।

डॉ. प्रमोदिनी पण्डा विद्याद्वयं समाश्रित्य नैके शोधलेखाः पुरस्कृतवती। इमा शोधसंगोष्ठीषु पठिताः प्रशंसिताश्च। एकत्र सौन्दर्यदिदृक्षया सा एतानि शोधपत्राणि संकलय्य पुस्तकरूपेण विदुषां समक्षं प्रस्तौतीति ज्ञात्वा मनसि मे महान् मोदः। वैदिकवाङ्मयादारभ्य लौकिकसंस्कृतसाहित्यं यावद् ज्ञानविज्ञानपरका एते शोधनिबन्धा अवश्यं विदुषां शोधच्छात्राणां च महते उपकाराय भविष्यतीति मे द्रढीयान् विश्वासः। **संस्कृतामृत**मिति नाम्नाभिहितं पुस्तकं साफल्यं गच्छत्वति मे शुभाशिषः। लेखकस्य महनीयाः गुणाः शास्त्रेषु वर्णिताः—

**मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः।**
**सर्वशास्त्रसमालोकी ह्येषः साधुः स लेखकः।।**

एते सर्वे एव लेखकस्य गुणाः पण्डामहोदयायां वर्तन्ते इति मेऽनुभवः, यतो हि सा बहुवर्षाणि यावन्मया सह श्रमणविद्यासंकाये सगौरवं साध्यवसायं च कार्यं कृतवती। एतादृशकर्मणि सा सदैव सरस्वतीसमाराधन-तत्परा भवत्विति परमकारुणिकविश्वनाथस्य चरणकमलयोः मे प्रार्थना। शुभमस्तु।

**प्रो. यदुनाथ प्रसाद दुबे**
कुलपतिः

# प्राक्कथन

**यत्कीर्तनं यत्स्मरणं यदीक्षणं**
**यद्वन्दनं यच्छ्रवणं यदर्हणम्।**
**लोकस्य सद्यो विधुनोति कल्मषं**
**तस्मै सुभद्रश्रवसे नमो नमः।।**

महान् आलङ्कारिक दण्डी ने संस्कृत के बारे में कहा है—**'संस्कृतं नाम दैवीवागन्वाख्याता महर्षिभिः'** यह दैवीवाक् भारतवर्ष की सर्वप्राचीन भाषा है जिसके माध्यम से सभी भारतीय विद्यायें वर्णित हैं। प्रमुख रूप में भारतीय विद्यायें चौदह हैं—चार वेद, छः वेदाङ्ग, मीमांसा, न्याय, धर्मशास्त्र और पुराण। उसके पश्चात् चार उपवेद—आयुर्वेद, धनुर्वेद, गान्धर्ववेद एवं स्थापत्य वेद को मिलाकर विद्याओं की संख्या अठारह हो गई है। इससे अतिरिक्त भारतीय परम्परामें चौसठ कलायें भी हैं। विद्या और कलाओं में सामान्य अन्तर यह है कि विद्यायें ज्ञान देती हैं और कलायें कौशल सिखाती हैं। इन अठारह विद्याओं एवं चौसठ कलाओं के बारे में संपूर्ण ज्ञान प्राप्त करने के लिए मनुष्य को अनेक जन्म लेना पड़ेगा। मैं धन्य हूँ कि भारतीय विद्याओं के बारे में कुछ सामान्य जानकारी प्राप्त करने के लिए मेरे पिता माता मुझे संस्कृत पढ़ाये। मैं जब विद्यार्थिनी थी तब हमारे पाठ्यक्रम में वेद, व्याकरण, साहित्य के अन्तर्गत कुछ काव्य एवं अलङ्कार पाठ्यक्रम में थे। जब मैं अध्ययन में आगे बढ़ती गई तो मुझे संस्कृत वाङ्मय के बृहत् कलेवर के बारे में ज्ञान प्राप्त हुआ। इस ज्ञान के ज्ञाता एवं शास्त्रार्थ परम्परा में अध्ययन अध्यापनरत गुरु और शिष्यों को देख कर मैं आश्चर्यचकित हो गई। तब मैं भर्तृहरि के एक पद्य को स्मरण करने लगी—

**यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।**
**यदा किञ्चित्किञ्चिद् बुधजनसकाशादवगतं**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः।।**

इस प्रकार जब मैं पुरी छोड़कर भुवनेश्वर, काञ्ची, दिल्ली एवं काशी आदि स्थान में गई तब ज्ञान प्राप्त करने की इच्छा मुझे आगे बढ़ने हेतु प्रेरणा दी। तब मैं कभी पीछे मुड़ कर नहीं देखी।

छात्र जीवन से मेरी प्रवृत्ति वेद शास्त्र में रही। परन्तु वेद को समझने के लिए व्याकरण आदि शास्त्रों को जानना चाहिए, यह समझ कर मैंने व्याकरण, निरुक्त, धर्मशास्त्र, अर्थशास्त्र एवं पुराण आदि साहित्य ग्रन्थों का अनुशीलन किया। शास्त्रों में निहित ज्ञान एवं मेरे अनुभव एवं परवर्ती पीढ़ी को कुछ देने की इच्छा से मैंने कुछ लिखने लगा एवं विद्वानों के सम्मुख, शोध संगोष्ठी एवं परिसम्वाद गोष्ठी में पत्र वाचन के रूप में मैंने उन्हें प्रस्तुत किया। ये शोधपत्र कहीं कालगर्भ में नष्ट न हो जायें एवं अनेक चिन्तन के पश्चात् प्रस्तुत विद्यायें विस्मरित न हो जाए, इन्हें मैंने भौतिक रूप देना चाहा। कहा गया है कि—

**निर्गुणस्य हतं रूपं दुःशीलस्य हतं कुलम्।**
**असिद्धस्य हता विद्याऽभोगेन हतं धनम्।।**

मेरे शोधपत्र भाषा की दृष्टि से तीन भागों में विभाजित हैं—संस्कृत, हिन्दी एवं अंग्रेजी, जिसमें वेद से लेकर अर्वाचीन संस्कृत तक अनेक विषय समेटे गये हैं। भाषा की दृष्टि से विभाजन करके पुन: उसमें वेद से लेकर अर्वाचीन संस्कृत तक विषयों की दृष्टि से क्रमबद्ध करके मुद्रण करने की इच्छा प्रकट की। अध्ययन हेतु **प्रो. गङ्गाधर पण्डा** जी मुझे प्रेरित किये और पूर्ण सहयोग प्रदान किये, जो सांसारिक जीवन में विद्या के साथ जुड़े रहने का प्रमुख कारण हैं। अध्ययन हेतु मेरे पिता **स्वर्गत पद्मचरण पण्डा** एवं माता **श्रीमती तारामणि पण्डा** ने मुझे उत्साह देकर प्रेरित किया था। मैं उन दोनों की आभारी हूँ।

सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी के कुलपति **प्रो. यदुनाथ दुबे** ने इस पर **'पुरोवाक्'** लिखी है, अत: मैं उन्हें धन्यवाद देकर उनसे आधमर्ण्य प्रकट करती हूँ। चौखम्भा भारती अकादमी, वाराणसी ने उक्त ग्रन्थ को प्रकाशन करने हेतु सहमति दी, अत: मैं उनके आभारी हूँ। **श्रीयुत अनूप कुमार नागर**, श्रीजी प्रिण्टर्स, वाराणसी ने उसे निर्दोष मुद्रण करने का प्रयत्न किया है। मैं उनको आन्तरिक धन्यवाद देती हूँ।

यह ग्रन्थ विद्वानों को आनन्द दे एवं शोधार्थियों के सहायक हो, यह कामना करती हुई उक्त ग्रन्थों को भूतभावन परम कारुणिक श्री विश्वनाथ जी के चरणों में समर्पित करती हूँ।

**प्रमोदिनी पण्डा**

# विषयानुक्रमणिका

# वैदिकवाङ्मये सामाजिकचिन्तनं विश्वाभ्युदयश्च

'विश्वं भवत्वेकं नीडमिति' वसुधैव कुटुम्बकस्य भावं निर्वहन्ती भारतीया संस्कृतिः समाजनिर्माणे नितरां प्रयत्नशीला वर्तत इति निश्चप्रचं वक्तुं शक्यते। वैदिकीं भावनां धारयन्ती सुभाषितान्यपि गायन्ति यत्पृथिव्याः कल्याणार्थमात्मत्यागोऽपि वरम्।

**त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।**
**ग्रामं जनपदस्यार्थे ह्यात्मार्थे पृथिवीं त्यजेत्।।** [१]

संस्कृतिरियं प्रमुखरूपेण वैदिकवाङ्मये विलसति। वैदिकवाङ्मयं संहिताद् आरभ्य सूत्रसाहित्यं क्रोडीकरोति। तदन्तर्गतं संहिता-ब्राह्मण-आरण्यक-उपनिषद्-वेदाङ्ग (छन्दः-कल्प-ज्योतिष-निरुक्त-शिक्षा-व्याकरण)-उपवेद-सूत्रसाहित्यं च भवति। राष्ट्रमेव श्रेष्ठं भवतीति सन्देशं धारयन्तः सन्ति नैके मन्त्राः। 'जीवेम शरदः शतम्' इति विश्वसन्तः भारतीयाः दीर्घजीवनाय यतन्ते स्म। गृहस्थाश्रमस्य श्रेष्ठतां श्रुतिमनुसरन्ती स्मृतिः कथयति—

**यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।।** [२]

एवमेव अथर्ववेदे **'एतं भागं परि ददामि विद्वान् विश्वकर्मन् प्रथमजा ऋतस्य। अस्माभिर्दत्तं जरसः परस्तादच्छिन्नं तन्तुमनु सं तरेम'** [३] इति मन्त्रे जनः प्रजातन्तुं निर्वहन्तः दायादाः अग्निहोत्रादियज्ञानुष्ठानं निरन्तररूपेण सम्पादयिष्यन्तीति चिन्तयति। विवाहादन्तरं (ब्रह्मचर्य-गार्हस्थ-वानप्रस्थ-संन्यासेति चतुर्ष्वाश्रमेषु) श्रेष्ठाश्रमस्य गृहस्थाश्रमस्य प्रारम्भो भवति। यस्याः कन्यायाः केनापि कारणेन विवाहो न भवति, तस्याः पितुः गृहे वासो भवतीति—'एषा ते राजकन्या वधूर्नि धूयत्तां यम। सा मातुर्बध्यतां गृहेऽतो भ्रातुरथो पितुः' [४] इति मन्त्रः सूचयति विवाहादनन्तरं दम्पती वैवाहिकबन्धनेनाबद्धौ भूत्वा नूतनभावनया सांसारिककर्तव्यं निर्वहतः। अतः उभयोः उत्तमसम्बन्ध आवश्यक इति **'सं चेन्नयाथो**

**अश्विना कामिना सं च वक्षथः। सं वां भगासो अग्मत सं चित्तानि समु व्रता**'[५] मन्त्रः कथयति। तदानीं नारी सौभाग्यवती भवतीति। 'इयमग्ने नारी पतिं विदेष्ट सोमो हि राजा सुभगां कृणोति। सुवाना पुत्रान्महिषी भवाति गत्वा पतिं सुभगा हि राजतु'[६] मन्त्रे वर्णितम्। परिवारजनानां सहयोगं प्राप्य नारी अजिता अमुषिता भवतीति 'प्रेतं पादौ च स्फुरतं वहतं पृणातो गृहान्। इन्द्राण्येतु प्रथमाजीतामुषिता पुरः'[७] इति मन्त्रात् ज्ञायते। जीवने जन्मनः प्रमुखः प्रभावः भवतीति ज्ञानमासीत्। अतः षोडशसंस्कारविधेः प्रचलनमासीत्। सुखप्रसूतये कामना 'यथा वातो यथा मनो यथा पतन्ति पक्षिणः। एषा त्वं दशमास्य साकं जरायुणा पताव जरायु पद्यताम्'[८] इति मन्त्रे दृश्यते। 'प्राणापानो मृत्योर्मा पातं स्वाहा।'[९] 'ओजोऽस्योजो मे दाः स्वाहा।'[१०] इति दीर्घजीवनस्य कामनां कृत्वा दीर्घायुष्यं **'ये देवा दिवि ष्ठ ये पृथिव्यां ये अन्तरिक्षे ओषधीषु पशुष्वप्स्वन्तः। ते कृणुत जरसमायुरस्मै शतमन्यान्परि वृणन्तु मृत्युन्**'[११] अनेन मन्त्रेण इच्छन्ति। आर्याणां विभिन्नरोगाणां विषये ज्ञानमासीत्। रोगस्य मुख्यकारकः क्रिमिः आसीत्। तस्य निवारणार्थं 'दृष्टमदृष्टमतृहमथो कुरुरुमतृहम्। अल्गण्डून्सर्वाच्छलुनान्क्रिमीन्वचसा जम्भयामसि'[१२] इत्यनेन चेष्ठन्ते स्म। सर्वेषां रोगनिवारणार्थं 'शं मे परस्मै गात्राय रामस्त्ववराय मे। शं मे चतुर्भ्यो अङ्गेभ्यः शमस्तु तन्वे मम'[१३] कामनां कृतवन्तः। तत्र जलं 'अप्स्वन्तरमृतमप्सु भेषजम्। अपामुत प्रशस्तिभिरश्ना भवथ वाजिनो गावो भवथ वाजिनीः'[१४] इति कथनेन न केवलं मनुष्याणां कृते अपित्वश्वानां गवां कृते उपकारक भवतीति सूचयित्वा सर्वविधजलानां उपकारमिच्छन्ति **'शं न आपो धन्वन्याः शमु सन्त्वनूप्याः। शं नः खनित्रिमा आपः शमु याः कुम्भ आभृताः शिवा नः सन्तु वार्षिकीः**'[१५] इति मन्त्रे। हस्तस्पर्शेणापि रोगनिवारणं भवितुमर्हतीति 'अयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः'[१६] इति मन्त्रात् ज्ञायते। 'सविता आत्मा जगतः तस्थुषश्च'[१७] इति ऋग्वेदे उक्तम्। सूर्यः आयुः यच्छतीति 'आयुर्ददं विपश्चितं श्रुतां कण्वस्य वीरुधम्। आभारिषं विश्वभेषजीमस्यादृष्टान् नि शमयत्'[१८] मन्त्रे प्रशंसितम्।

मानसिकविकासाय स्वस्थशरीरस्य यथा आवश्यकताऽस्ति, तथैव निद्राया अपि इति 'य आस्ते यश्चरति यश्च तिष्ठन्विपश्यति। तेषां सं दध्मो अक्षीणि यथेदं हर्म्यं तथा'[१९] मन्त्रात् ज्ञायते। तदर्थं 'परोऽपेहि मनस्पाप किमशस्तानि शंससि। परेहि न त्वा कामये वृक्षा वनानि सं चर गृहेषु गोषु मे मनः'[२०] मन्त्रे प्रार्थ्यते। यो दाधार पृथिवीं विश्वभोजसं यो अन्तरिक्षमापृणाद्रसेन। यो अस्तभ्नादिवमूर्ध्वो महिम्ना तेनौदनेनाति तराणि मृत्युम्'[२१] इति मन्त्रे मृत्योः तरणमिच्छन् 'नैनं घ्नन्ति पर्यायिणो न सन्नां अवगच्छति। अग्नेर्यः क्षत्रियो विद्वान्नाम गृह्णात्यायुषे'[२२] इति मन्त्रे दीर्घायुषमिच्छति। अतः कामयति दीर्घजीवनं 'शतं जीव शरदो वर्धमानः शतं हेमन्ताच्छतमु वसन्तान्। शतं त इन्द्रो अग्निः सविता बृहस्पतिः शतायुषा हविषाहार्षमेनम्'[२३] इति मन्त्रे।

वैदिककाले भारतीयानां जीवनं सामाजिकमासीत्। सामाजिक-भावनायाः प्रारम्भः विकासश्च परिवारैव भवति। देवऋणऋषिऋण-पितृऋणेभ्योऽधमर्णो मनुष्यः पितृसुश्रुषया किञ्चिन् मुक्तं भवितुमर्हतीति **'भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या नः। द्यौर्नः पिता पित्र्याच्छं भवाति जामिमृत्वा भावपत्सि लोकात्'**[२४] इति मन्त्रे कथितम्। उत्तमनागरिकस्य उत्तमगुणाः स्युः। अतः 'ईर्ष्याया ध्राजिं प्रथमां प्रथमस्या उतापराम्। अग्निं हृदय्यं शोकं तं ते निर्वापयामसि'[२५] इति मन्त्रे ईर्ष्यानिवारणमिच्छन् 'अयं दर्भो विमन्युक्तः स्वाय चारणाय च। मन्योर्विमन्युकस्यायं मन्युशमन उच्यते'[२६] इति मन्त्रे मन्युशमनार्थं प्रार्थयति। यदा ईर्ष्यायाः निवारणं भवति, क्रोधस्य शमनं भवति, तदानीं मित्रताभावः वर्द्धते इति 'अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः। यथा संमनसौ भूत्वा सखायाविव सचावहै'[२७] मन्त्रात् स्पष्टं भवति।

यथा व्यक्तेः विकासेन समाजस्य विकासो भवति, तथैव समाजस्य विकासेन राष्ट्रस्य। अतः शत्रुविनाशाय ब्राह्मणः 'त्वामग्ने वृणते ब्राह्मणा इमे शिवो अग्ने संवरणे भवानः। सपत्नघ्नग्ने अभिमातिजिद्भव स्वे गये जागृहि'[२८] इति मन्त्रे अग्निं स्तौति। क्षत्रियः 'सिंहप्रतीको विशो अद्धि सर्वा व्याघ्रप्रतीकोऽव बाधस्व शत्रून्। एकवृष इन्द्रसखा जिगीवां छत्रूयताया खिदा

भोजनानि'[२९] इत्येवं पराक्रमी स्यात् येन 'आ पश्यति प्रति पश्यति परा पश्यति पश्यति। दिवमन्तरिक्षमाद्भूमिं सर्वं तद्देवि पश्यति'[३०] तथा च 'दर्शय मा यातु धानान्दर्शय यातुधान्यः। पिशाचान्सर्वान्दर्शयेति त्वा रम ओषधे'[३१] इतिवत् तीक्ष्णदृष्टिसम्पन्नो भवति। ततः अन्यमनुष्यान्निव 'मनसे चेतसे धिय आकूतय उत चित्तये। मत्यै श्रुताय चक्षसे विधेम हविषा वयम्'[३२] स्वशक्तिविस्तारं करोति।

धन-धान्येन समाजः समृद्धो भवति। धान्यस्य सुरक्षाविधिः 'हतं तर्दं समङ्गमाखुमश्विना छिन्तं शिरो अपि पृष्टीः शृणीतम्। यवात्रेददानपि नह्यतं मुखमधाभयं कृणुतं धान्याय'[३३] इति वर्णितोऽस्ति। कृषेः प्राधान्यम् 'इमां शालां सविता वायुरिन्द्रो बृहस्पतिर्नि मिनोतु प्रजानन्। उक्षन्तूद्रा मरुतो घृतेन भगो नो राजा नि कृषिं तनोतु'[३४] इति मन्त्रात् प्रतिभाति। एतदर्थं गोसम्पदः आवश्यकता। अतः 'यूयं गावो मेदयथा कृशं चिदश्रीरं चित्कृणुथा सुप्रतीकम्। भद्रं गृहं कृणुथ भद्रवाचो बृहद्वो वय उच्यते सभासु'[३५] इति मन्त्रे गोप्रशंसा कृता। तथैव 'येन धनेन प्रपणं चरामि धनेन देवा धनमिच्छमानः। तस्मिन्म इन्द्रो रुचिमा दधातु प्रजापतिः सविता सोमो अग्निः'[३६] इति मन्त्रे वाणिज्यस्य प्रशंसा विहिता।

'एषामहमायुधा सं स्याम्येषां राष्ट्रं सुवीरं वर्धयामि। एषां क्षत्रमजरमस्तु विष्ण्वेषां चित्तं विश्वेऽवन्तु देवाः'[३७] इति राष्ट्रस्य या परिकल्पना कृता, तस्य रक्षां 'भूतो भूतेषु पय आ दधाति स भूतानामधिपतिर्बभूव। तस्य मृत्युश्चरति राजसूयं स राजा राज्यमनुमन्यतामिदम्'[३८] इति उत्तमगुणयुक्तः राजा भवितुं प्रभवति। यदा राजा उत्साहेन शत्रून् 'संसृष्टं धनमुभयं क्षमाकृतमस्मभ्यं धत्तां वरुणश्च मन्युः। भियो दधाना हृदयेषु शत्रवः पराजितासो अपनि लयन्ताम्'[३९] इति जयति, तदानीं 'सपत्नक्षयणो वृषाभिराष्ट्रो विषासहिः। यथाहमेषां वीराणां विराजानि च'[४०] इति राष्ट्ररक्षा भवितुमर्हति। राष्ट्रे राजा 'विलपन्तु यातुधाना अत्रिणो ये किमीदिनः। अथेदमग्ने नो हविरिन्द्रश्च प्रति हर्यतम्'[४१] इति दुष्टनिग्रहं करोति। पुनश्च 'इदं विष्कन्धं सहत इदं बाधते अत्रिणः अनेन विश्वा ससहे या जातानि पिशाच्याः'[४२] इति चोरान् नाशयति। प्रजापालकः 'वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः। अधमं

गमया तमो यो अस्मां अभिदासति'[४३] इत्यनेन प्रकारेण प्रजाः पालयति। यदा राजा 'ज्याके परिणो नमाश्मानं तन्वं कृधि। वीडुर्वरीयोऽरातीरप द्वेषांस्या कृधि'[४४] इति विजयं प्राप्नोति, तदा तस्य प्रभावः 'अस्य देवाः प्रदिशि ज्योतिरस्तु सूर्यो अग्निरुत वा हिरण्यम्। सपत्ना अस्मदधरे भवन्तूत्तमं नाकमधि रोहयेमम्'[४५] प्रसारितो भवति। राजा 'इहैवैधि माप ज्येष्ठाः पर्वत इवाविचाचलत्। इन्द्र इवेह ध्रुवस्तिष्ठेह राष्ट्रमुधारय'[४६] इति राष्ट्रे 'अस्थाद् द्यौरस्थात पृथिव्यस्थाद् विश्वमिदं जगत्। आस्थाने पर्वता अस्थु स्थाम्न्यश्वाँ अतिष्ठिपत्'[४७] इति स्थिरतामानयति। 'यथा द्यौश्च पृथिवी च न बिभीतो न रिष्यतः। एवा मे प्राण मा विभेः'[४८] इति प्रजाः निर्भयेन जीवनं यापयन्तः 'सूषूदत मृडत मृडया नस्तनूभ्यो मयस्तोकेभ्यस्कृधि'[४९] इति सुखं प्राप्नुवन्ति।

सुराष्ट्रे जनाः 'अपमित्यमप्रतीतं यदसि यमस्य येन बलिना चरामि। इदं तदग्ने अनृणो भवामि त्वं पाशान् विचृतं वेत्थ सर्वान्'[५०] इति अनृणाः सन्तः 'यदुवक्तथामृतं जिह्वया वृजिनं बहुः। राज्ञस्त्वा सत्यधर्मणो मुञ्चामि वरुणादहम्'[५१] इति विचार्य असत्यभाषणं परित्यजन्ति। राजा 'एकशतं विष्कन्धानि विष्ठिता पृथिवीमनु। तेषां त्वामग्र उज्जहरुर्मणिं विष्कन्ध-दूषणम्'[५२] इति यदा सर्वाणि विघ्नानि नाशयति, तदानीं प्रजाः **'सम्राटस्यसुराणां ककुन्भमनुष्याणाम्। देवानामर्धभागसि त्वमेकवृषो भव'**[५३] इति विचारेण उद्‌बुद्धाः महान्तः भवन्ति। जनाः 'सं सं स्रवन्तु पशवः समश्वाः समु पूरुषाः। सं धान्यस्य या स्फातिः संस्राव्येण हविषा जुहोमि'[५४] इति भावनया सहावस्थानं कुर्वन्ति। तेन **'सं वो मनांसि सं व्रता समाकूतीर्नमामसि। अमी ये विव्रता स्थन तान्वः सं नमयामसि'**[५५] इति राष्ट्रीयैकता जागर्ति। अस्यां परिस्थितौ राज्ञः 'यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत। यशा विश्वस्य भूतस्याहमस्मि यशस्तमः'[५६] इति यशः प्राप्तिः भवति। सर्वे जनाः मिलित्वा 'पुनः प्राणः पुनरात्मा न ऐतु पुनश्चक्षुः पुनरसुर्न ऐतु। वैश्वानरो नो अदब्धस्तनूपा अन्तस्तिष्ठति दुरितानि विश्वा'[५७] इति आत्मरक्षार्थं दीर्घायुषं प्रार्थयन्ते। तदानीं 'सबन्धुश्चासबन्धुश्च यो अस्मा अभिदासति। सर्वं तं रन्धयासि मे यजमानाय सुन्वते'[५८] इति राष्ट्ररक्षा

भवितुमर्हति। एवं पराक्रमिणः राज्ञः 'उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते वन्वतां विष्ठितं जगत्। स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद् दवीयो अप सेध शत्रून्'[५९] इति दुन्दुभिः शत्रोः मनसि भयमुत्पादयति। राज्ञा सुरक्षिताः जनाः आशापूर्त्यर्थं 'आशानामाशापालेभ्यश्चतुर्भ्यो अमृतेभ्यः। इदं भूतस्याध्यक्षेभ्यो विधेम हविषा वयम्'[६०] इति देवं पूजयन्ति। सर्वविधसुखप्राप्त्यनन्तरं प्रजाः 'प्रजानन्तः प्रति गृह्णन्तु पूर्वे प्राणमङ्गेभ्यः पर्याचरन्तम्। दिवं गच्छ प्रति तिष्ठा शरीरैः स्वर्गं याहि पथिभिर्देवयानैः'[६१] इति स्वर्गप्राप्त्यर्थमभिलषन्ति।

यदि केनापि कारणेन राज्ञोऽधःपतनं भवति, राष्ट्रस्य रक्षार्थं तस्य पुनः स्वराज्ये स्थापना 'श्येनो हव्यं नयत्वा परस्मादन्यक्षेत्रे अपरुद्धं चरन्तम्। अश्विना पन्थां कृणुतां सुगं त इमं सजाता अभिसंविशध्वम्'[६२] इति विचारेण कर्तव्या।

राष्ट्राणां सर्वविधविकासेन विश्वस्य विकासः सम्भवति 'वेनस्तत्पश्यत्परमं गुहा **यद्यत्र विश्वं भवत्येकरूपम्**। इदं पृश्निरदुहज्जायमानाः स्वर्विदो अभ्यनूषत व्राः'[६३] इति मन्त्रात् एतत् स्पष्टं भवति। यदा विश्वस्मिन् एकरूपता आगच्छति तदानीं 'विश्वं भवत्येक नीडम्', इति भावना भवति—

**सं जानिध्वं सं पृच्यध्वं सं वो मनांसि जानताम्।**
**देवा भागं यथा पूर्वे संजानाना उपासते।**
**समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम्।**
**समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम्।।**
**समानी व आकूतीः समाना हृदयानि वः।**
**समानमस्तु वो मनो यथा वः सुसहासति।।**[६४]

**सन्दर्भाः**

१. सुभाषितरत्नभाण्डागारः, तृतीयप्रकरणम्;
२. मनुस्मृतिः, ३.७७।
३. अथर्ववेदः ६.१२२.१;
४. अथर्ववेदः १.१४.२।

५. अथर्ववेदः २.३०.२;
६. अथर्ववेदः १.३६.३।
७. अथर्ववेदः १.२७.४;
८. अथर्ववेदः १.११.६।
९. अथर्ववेदः २.१६.१;
१०. अथर्ववेदः २.१७.१।
११. अथर्ववेदः १.३०.३;
१२. अथर्ववेदः २.३१.२।
१३. अथर्ववेदः १.१२१.४;
१४. अथर्ववेदः १.४.४।
१५. अथर्ववेदः १.६.४;
१६. ऋग्वेदः।
१७. अथर्ववेदः ६.५२.३;
१८. अथर्ववेदः ११.५.५।
१९. अथर्ववेदः ४.१३.६;
२०. अथर्ववेदः ६.४५.१।
२१. अथर्ववेदः ४.३५.३;
२२. अथर्ववेदः ६.७६.४।
२३. अथर्ववेदः ३.११.४;
२४. अथर्ववेदः ६.१२०.२।
२५. अथर्ववेदः ६.१८.१;
२६. अथर्ववेदः ६.४३.१।
२७. अथर्ववेदः ६.४२.१;
२८. अथर्ववेदः २.६.३।
२९. अथर्ववेदः ४.२२.७;
३०. अथर्ववेदः ४.२०.१।
३१. अथर्ववेदः ४.२०.६;
३२. अथर्ववेदः ६.४१.१।
३३. अथर्ववेदः ६.५०.१;
३४. अथर्ववेदः ३.१२.४।
३५. अथर्ववेदः ४.२१.६;
३६. अथर्ववेदः ३.१५.६।
३७. अथर्ववेदः ३.१९.५;
३८. अथर्ववेदः ४.८.१।
३९. अथर्ववेदः ४.३१.७;
४०. अथर्ववेदः १.२९.६।
४१. अथर्ववेदः १.७.३;
४२. अथर्ववेदः १.१६.३।
४३. अथर्ववेदः १.२१.२;
४४. अथर्ववेदः १.२.२।
४५. अथर्ववेदः १.९.२;
४६. अथर्ववेदः ६.८७.२।
४७. अथर्ववेदः ६.७७.१;
४८. अथर्ववेदः २.१५.१।
४९. अथर्ववेदः १.२६.४;
५०. अथर्ववेदः १.११७.१।
५१. अथर्ववेदः १.१०.४;
५२. अथर्ववेदः ३.९.६।
५३. अथर्ववेदः ६.८६.३;
५४. अथर्ववेदः २.२६.३।
५५. अथर्ववेदः ३.८.५;
५६. अथर्ववेदः ६.५८.३।
५७. अथर्ववेदः ६.५३.२;
५८. अथर्ववेदः ६.५४.३।
५९. अथर्ववेदः ६.१२६.१;
६०. अथर्ववेदः १.३१.१।
६१. अथर्ववेदः २.५४.५;
६२. अथर्ववेदः ३.३.४।
६३. अथर्ववेदः २.१.१;
६४. अथर्ववेदः ६.६२.१-३।

*

# समसामयिकदृष्ट्या वेदानुशीलनम्

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता[१]।।**

वेदोऽखिलज्ञानमूलम्। संहिताब्राह्मणारण्यकोपनिषद्भेदेन विभक्तः वैदिकवाङ्मयः परमात्मनः महेश्वरस्य निःश्वासभूतो भवति[२]। ऋषयः मन्त्रद्रष्टारः, न तु कर्तारः। एवमपौरुषेयस्य वेदस्य अर्थावबोधनं न सहजसाध्यम्, तथाप्यर्थज्ञानं विना वेदाध्ययनमनर्थकमिति निरुक्ते उक्तम्[३]। उच्चावचा हि मन्त्राः। मन्त्रस्य प्रथमव्याख्यानं ब्राह्मणमकरोत्। यः पारपर्योविद् नाम परम्परया वेदाध्ययनमकरोत्, स एव अर्थावबोधनार्थं समर्थो भवति[४]। चतुर्दशविद्यासु[५] षडङ्गानि वेदाध्ययने सहायकभूतानि[६]। इदानीं जनाः वेदमधीत्य त्वरितवक्तारो भवन्ति। परन्तु महाभाष्ये 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यतीति'[७] लिखितमस्ति। पुनश्च षडङ्गेषु तैत्तरीयोपनिषदनुसारेण वर्णस्वराद्युच्चारणप्रकारो यत्र उपदिश्यते सा शिक्षा[८]। श्रौत-धर्म-गृह्य-

---

१. ऋ.भा.भू.।

२. यस्य निःश्वसितं वेदो यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम्।। ऋ.भा.भू.

३. स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा।। (नि.१.१८)

४. योऽनुचानो स नो महान्।।

५. पुराणतर्कमीमांसा धर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश।। (या.स्मृ. १.३)

६. छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते।। (पा.शि. ४१-४२)

७. महाभाष्यम्, १.१.२६७

८. वर्णः स्वरः मात्रा बलं साम सन्तान इत्युक्तः शिक्षाध्यायः। (तै.उ., १.१)

शुल्बसूत्रभेदेन विभक्तः कल्पः यागप्रयोगविधिं समर्थयति[१]। रक्षोहागमलघ्वसन्देहाः प्रयोजनं व्याकरणस्य[२]। अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्[३]। नैघण्टकं-नैगमं-दैवतमिति निरुक्तस्य त्रीणि काण्डानि अध्यायपञ्चके शब्दानामर्थं सम्यक् प्रतिपादयन्ति, वेदस्य अपरं नाम छन्दो भवति। छन्दः विना मन्त्रोच्चारणं भवितुं नार्हतीति कृत्वा गायत्र्युष्णिगनुष्टुब्बृहतीपंक्ति–त्रिष्टुब्जगतीत्येतानि सप्त छन्दांसि वेदस्य पादत्वेन परिगणितानि। यज्ञकालार्थसिद्धये[४] ज्योतिषां नाम ग्रह–नक्षत्राणामयनस्य गमनस्य स्थितेः वा गणनां कृत्वा कालस्य निर्धारणं क्रियते ज्योतिषशास्त्रे।

वेदस्य शैलीदृष्ट्या त्रिधा विभाजनं विहितम्। छन्दोबद्धमन्त्राः ऋक्[५], गानयुक्तऋक् मन्त्राणां नाम साम[६], अनियताक्षरावसानो यजुः[७] इति 'वेदत्रयी' उच्यते। परन्तु यज्ञेषु प्रयोगदृष्ट्या 'वेदचतुष्टयं' प्रसिद्धम्। अथर्ववेदस्य ऋत्विक् ब्रह्मा यज्ञकार्यस्य अध्यक्षतां कुर्वन् चतुर्वेदी (सर्ववेदविद्) भवति। साधारणतः ऋक्-यजुः–सामवेदानां मन्त्राः आमुष्मिकफलदातारः, अथर्ववेदस्य मन्त्राः ऐहिकसुखदातार इति विचारः। परन्तु '**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते**[८]' इति उपनिषदः उद्घोषात् सर्वे संहितामन्त्राः ब्राह्मणारण्यकैः ऐहिकफलदातार इति प्रतिभाति।

परोक्षप्रियाः देवताः। उच्चावच्चा हि मन्त्राः, अतः मन्त्रस्य गूढार्थावबोधनार्थं भाष्यस्य आवश्यकता नूनमेव। मन्त्राणां व्याख्या अध्यात्म-अधिदैवत-अधिभूत-आर्ष-अधियज्ञ-परिव्राजक-नैरुक्त-वैयाकरण-

---

१. कल्प्यते समर्थ्यते यागप्रयोगोऽत्र (ऋ.भा.भू.)।

२. म.भा., १.१.१

३. ऋ.भा.भू.

४. वेदाङ्गज्यो. ३

५. तेषामृग् यत्रार्थवशेन पादव्यवस्था (जै.सू., २.१.३५)

६. गीतिषु सामाख्या (जै.सू., २.१.३६)

७. शेषे यजुः शब्दः (जै.सू., २.१.३७)

८. ईशोप. नि. ११

नैदान-आख्यान-अधिज्योतिष-ऐतिहासिक-सामाजिक-वैज्ञानिक-दृष्ट्या वा भवितुमर्हति। यद्यपि नैके भाष्यकाराः एकविधां नैकधां वा स्वीकृत्य मन्त्रव्याख्यानार्थं चेष्टितवन्तः, परन्तु भिन्ना संस्कृतिः, संस्कारस्य अभावः, पूर्वाग्रहः तेषां कार्यसम्पादने प्रतिबन्धका अभवन्। तथापि विश्वस्तरे वैदिकसाहित्यं प्रतिष्ठापयितुं तेषां योगदानमवश्यमेव स्वीकार्यम्।

**'एकं सद्विप्रा बहुधा वदन्तीति'**[१] वेदवाणीं समाश्रित्य ते वेदमन्त्रान् भिन्नभिन्नशैल्या प्रतिपादयन्ति। यतो हि एक एव शब्दो नैकार्थान् मण्डयति। एक एव मन्त्रः बाह्यदृष्ट्यान्तरिकदृष्ट्या च भिन्नार्थं बिभर्त्ति। एवं वेदार्थस्य गूढतां मनसि निधाय पूर्वोक्तविधव्याख्यानपद्धतिमङ्गीकरोति।

**१. अधिदैवतप्रक्रिया**

वेदेषु येषां देवानां वर्णनमुपलभ्यते तेषु प्रायोऽनेके प्रकृतिपरकाः। यथा–अग्निवायुसवितृपुषन्प्रभृतयः। केचन आचार्याः एतादृशदेवान् अधिदैवतरूपेणामनन्ति। बादरायणः तान् अभिमानीति पदेन व्यपदिश्यति। यास्काचार्यः एतान् त्रिषु भागेषु विभज्य पृथग्विधनामकरणं करोति। १. पृथिवीस्थानीयाः, २. अन्तरिक्षस्थानीयाः, ३. द्युस्थानीयाश्च। पृथिवी-स्थानेष्वग्निः, अन्तरिक्षस्थानेषु वायुः, द्युस्थानेषु सूर्यश्च प्रामुख्यं भजन्ते। कुत्रचिदेको देवो भिन्नभिन्नरूपेण त्रिषु स्थानेषु तिष्ठति–यथा सूर्योऽग्निरूपेण पृथिव्यां, विद्युद्रूपेण अन्तरिक्षे, सूर्यरूपेण च द्युलोके तिष्ठति।

वैदेशिकाः केचन देवान् चेतनजडभेदेन द्विधा स्वीकुर्वन्ति। वेदे केषाञ्चन देवानां हस्तपदादीनां वर्णनं दरीदृश्यते। Macdonell वदति, The physical aspect of the Vedic god is anthropomorphic. Thus head, face, eyes, arms, hands and the portion of human frame are ascribed to them.[२]

अतो यास्कप्रभृतयः प्राच्याः मैक्डोनलप्रभृतयः पाश्चात्त्याः आधि-दैविकप्रक्रियापक्षमङ्गीकुर्वन्ति।

---

१. ऋग्वेदः – १.१.५१

२. Macdonell - A History of Sanskrit Literature, M.B. p. 58.

**२. अध्यात्मप्रक्रिया**

वैदिकमन्त्राणां ब्रह्मविद्यापरकव्याख्या आध्यात्मिकव्याख्येति। अस्यां मन:प्राणजीवात्मनां गुणकर्मस्वभावानुरूपं व्याख्यानं भवति। हिरण्यगर्भप्राणसूक्तप्रभृतयो मन्त्रा आध्यात्मिका: भवन्ति। यथा–

**ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।**
**यस्तन्नवेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते।।**
ऋग्., १.१६४.३९

आधुनिकव्याख्याकारेषु स्वामी दयानन्दोऽप्यध्यात्मप्रक्रियां बहुमनुते य: खलु इन्द्राग्निवरुणप्रभृतीन् जीवात्मपरमात्मरूपेण व्याख्याति।

**३. आर्षप्रक्रिया**

भाष्यकारा बुद्धिपूर्वकं वेदमन्त्राणां भिन्नभिन्नार्थान् सयुक्तिकं प्रतिपादयन्ति। इयं व्याख्याऽनुसन्धानात्मिका भवति यथा जीवान्नो अभिधेतन–ऋग् ८.६७.८ इति मन्त्रे जालबद्धमत्स्यस्य क्रन्दनं भवतीति व्याख्यायामुक्तम्। हे आदित्यादिदेवा: आगत्य बन्धनमुक्तान् कुर्वन्त्वति प्रासङ्गिकं व्याख्यानं जायते। अत: प्राणित्वेन सकलजीवा: प्रतीकरूपेण च मत्स्या गृह्यन्ते।

**४. परिव्राजकप्रक्रिया**

यास्काचार्यस्य व्याख्यायां परिव्राजकशब्दोऽध्यात्मपथं दर्शयति। यथा- **'स मातुर्योना परिवीतो अन्तर्बहुप्रजा निर्ऋतिमा निवेश'–ऋक्–१.१६४.३२।** अस्मिन् मन्त्रांशे निरुक्तपरका व्याख्या एवं भवति– **'बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजका वर्षकमे'ति नैरुक्ताः।** अत्र परिव्राजकव्याख्यायामस्यार्थ: क्रियते यद् बहुप्रजो मानवो महति कष्टे निपतति। केचन प्रक्रियामिमामध्यात्मकोटौ स्वीकुर्वन्ति।

**५. अधियज्ञप्रक्रिया**

वेदमन्त्राणां यज्ञपरकव्याख्या अधियज्ञप्रक्रियापदेनाभिधीयते। सायणाचार्यस्य व्याख्यापद्धति: यज्ञाधारिता भवति। उदाहरणं यथा–

**चत्वारि शृङ्गास्त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधाबद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश।।**

ऋक्. ४.५८.३

वृषभः–देवयज्ञः। चत्वारि शृङ्गा=चत्वारो वेदाः। त्रयोऽस्य पादाः=त्रीणि सबनानि–प्रातः, माध्यन्दिनं सायं च। द्वे शीर्षे=प्रापणीयमुदकनीयं च। सप्त हस्ताः=सप्त वैदिकछन्दांसि=गायत्री, उष्णिक्, अनुष्टुभ्, पङ्क्ति, बृहती, त्रिष्टुभ्, जगती च। त्रिधा बद्धः=मन्त्रब्राह्मणकल्पैः। अस्य मतस्य समर्थने वेदाङ्गज्योतिषकारो लगधो ब्रूते–वेदा हि यज्ञार्थमभिप्रवृत्ताः इति। (वे.ज्यो.श्लोक. ३)

## ६. नैरुक्तप्रक्रिया

यास्कात्पूर्वं नैके व्याख्याकारा नैरुक्तप्रक्रियामाश्रित्य व्याख्यां चक्रुः। तेषु औदम्बरायणः, और्णनाभः, कात्थक्यः, कौष्टुकिः शाकपूर्णिश्च प्रमुखा आसन्। यास्काचार्यः वेदोक्तनामानि यौगिकानीत्यङ्गीकरोति। यथा पर्जन्यपदव्याख्याने स नैकानर्थान् प्रयच्छति-तर्पयिता जन्यः, परो जेता, परो जनयिता, पार्जयिता रसानाम्। कदाचिद् यास्कः पूर्वाचार्यमतानि स्वीकृत्यापि भिन्नार्थान् दर्शयति। यथा–निषादः कस्मात्–निषदनो भवति। निषण्णमस्मिन् पापकमिति नैरुक्ताः।

## ७. वैयाकरणप्रक्रिया

निरुक्तं व्याकरणशास्त्रपूरकमित्युच्यते। पार्थक्यमेतावद् यत् निरुक्ते पदानां निर्वचनं यदा भवति व्याकरणे प्रकृतिप्रत्ययागमविकारादीनां चर्चा विधीयते। 'चत्वारि शृङ्गा' इति मन्त्रं यदा निरुक्तकाराः यज्ञपरकमर्थं कुर्वन्ति, पतञ्जलिरस्य व्याकरणगतार्थं निष्पादयति-यथा-चत्वारि शृङ्गा = नाम-आख्यात-उपसर्ग-निपाताश्च। त्रयोऽस्य पादाः = भूतभविष्यद्-वर्तमानकालाः। द्वे शीर्षे = सुबन्तः तिङन्तश्च। सप्तहस्ताः=सप्तविभक्तयः। त्रिधाबद्धः = उरः, कण्ठः शिरश्च। वृषभः शब्दरूपः बलीवर्दः। एवंप्रकारेण वैयाकरणा नैरुक्तेभ्यो भिद्यन्ते।

### ८. निदानप्रक्रिया

अयं प्रक्रियाविशेषः शब्दसाधनरूपोऽनुसन्धानात्मको भवति। कश्चन शब्दः निश्चितार्थमेकं व्यनक्ति। यथा उलूखलस्य व्युत्पत्तिकरणे पदद्वयं गृह्यते। उरुः करश्च। अस्य समाधानं निदानप्रक्रियाद्वारा भवति। परन्तु केचन व्याख्याकाराः कथयन्ति यदस्यान्तर्भावो निरुक्तप्रक्रियायां भवितुमर्हति।

### ९. ऐतिहासिकप्रक्रिया

वेदेषु वर्णितानामैतिहासिकघटनावलीनां व्याख्याऽनया भवति। यथा = वृत्रस्य मेघरूपं हित्वा त्वष्टोः पुत्रो वृत्रासुर इति गृह्यते। अश्विनौ अर्द्धरात्रात् प्रातःकालं यावत्कालमिति स्थाने अश्विनौ पुण्यकर्मराजानौ स्वीक्रियेते। **'कुमारं माता युवतिः समुग्धं गुहा बिभर्त्ति न ददाति पित्रे'** इत्यत्र इतिहासपक्षं स्वीकृत्य इक्ष्वाकुवंशीयः–राज्ञ त्रैवृणः जनपुत्रवृषर्षिः गृह्यते। वैदेशिका व्याख्याकारा अपि ऐतिहासिकप्रक्रियां स्वीकुर्वन्ति। ऋग्वेदे वर्णितमार्यदस्युयुद्धप्रसङ्गमधिकृत्य – Griffith ब्रुते – This verse contains the name of the five welknown Aryan tribes or families said to be descendants of the five similarly named sons of Yayati.

### १०. आख्यातप्रक्रिया

आख्यातस्य सामान्योऽर्थो भवति कथानकम्। इतिहासो यथा सत्यघटनाश्रितो भवति, आख्यानं कदाचित्काल्पनिकं भवति। वेदेषु बाहुल्यं दृश्यते आख्यानानाम्। **आह्व यदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रममुचतुरित्याख्यानम्।** एतत्प्रसङ्गं यास्क आख्यानं मनुते। उषसं यथा आदित्यो ग्रसते तदानीमश्विनौ समागत्य रक्षां कुरुतः। एवं प्रकारेण सरमा-पणिसंवाद-विश्वामित्रनदीसंवाद-यमयमीसंवाद-शुनःशेपसंवादा आख्यान-परम्परयागच्छन्ति।

### ११. अधिभूतप्रक्रिया

वेदमन्त्राणां भूतसम्बन्धिनी व्याख्या अधिभूतप्रक्रिया भवति अर्थाद् या व्याख्या समाजोपयोगिनी राष्ट्रकल्याणसाधनी भवति साऽत्र ग्राह्या भवति।

भिन्नभिन्नस्थलेषु वेदमन्त्राः समाज-जाति-विवाह-शिक्षा-कृषि-वाणिज्य-पशुपालनादीनां व्याख्यां सुविशदं कुर्वन्ति। एवं प्रकारेण च वैदिकदेवाः इन्द्रयमवरुणप्रभृतयः राजमन्त्रिसेनापतिसैन्यरूपेण प्रतिपादिताः सन्ति। धर्मशास्त्रस्य दायभागस्य सूचनं वेदे उपलभ्यते यथा **'पिता यत्र दुहितुः सेकमृञ्जन् स शग्म्येन मनसा दधन्वे।'** ऋक्. ३.३१.१। अत्र पुत्रवत् पुत्री दायभाक् इति स्पष्टमुल्लिखितमस्ति। आधुनिकवेदभाष्यकारेषु स्वामी दयानन्द इमामधिभूतप्रक्रियां पल्लवितवान्।

### १२. अधिज्योतिषप्रक्रिया

ज्योतिषामयनं चक्षुरिति पाणिनीयशिक्षानुसारेण वेदाङ्गेषु ज्योतिषस्य महत्त्वं वरीवर्त्ति। वेदे ग्रहनक्षत्रमासर्तुसंवत्सरायनादीनां वर्णनं प्रचुरं लभ्यते। एतान् सन्दर्भानुद्दिश्य व्याख्याऽपि भवति। एतदतिरिच्य इन्द्र-इन्द्राणी-वृषाकपिसंवादा ज्योतिशास्त्रपरका भवन्ति। अपि च वेदे कदापि पूषाविष्णुयमप्रभृतयः सूर्यवाचकाः भवन्ति।

### १३. वैज्ञानिकप्रक्रिया

इयं प्रक्रियाऽऽधुनिकयुगे एव प्रवर्त्तिता। अस्यां प्रक्रियायां ज्योतिष-गणित-आयुर्वेद रसायनशास्त्राणामध्ययनं भवति। धियं **घृताचीं साधन्ता**- ऋक्., १.२.७ इति मन्त्रे जलनिर्माणरहस्यं वर्तत इति कथ्यते। एवं प्रकारेण **अग्निसोमात्मकं जगद्** इति मन्त्रे सृष्टिरहस्यं सर्वं वर्तते इति व्याख्या श्लाघनीयाऽस्ति। वेदमन्त्रेषु समस्ताधुनिकविज्ञानं सन्निहितं वर्तत इति वैज्ञानिकप्रक्रियावादिनां मतम्।

आधुनिकयुगं वैज्ञानिकयुगनाम्ना परिचितम्। सर्वस्मिन् क्षेत्रे विज्ञानस्य अनुशीलनं प्रचलति। तथैव वैदिकसाहित्ये पर्यावरणं पदार्थविज्ञानं रसायनविज्ञानमायुर्वेदविज्ञानमित्यादीनामालोचना भवति। सहितस्य भावः साहित्यं भवति। साहित्ये समाजस्य सामाजिक-आर्थिक-राजनीतिक-आध्यात्मिक-नैतिक-भावनानां प्रतिफलनं भवति। तत्र प्रायोगिकविज्ञानस्य अनुशीलनं तमधिकं विश्वसनीयं कारयति। परन्तु प्रयोगशालायाः पद्धतेः अनुशीलनं नैव समीचीनम्। विविधं ज्ञानं विज्ञानं, विरुद्धं ज्ञानं विज्ञानं, विशेषज्ञानं विज्ञानमिति यदुक्तं तद् सर्वत्र स्फुटं भवति। पुनर्जन्म अस्ति न

वा, कर्मानुसारं तद् निर्धारितं भवतीति विचारः बहिर्मुखीमनः सञ्जमयति, येन जनः शास्त्रानुसारं व्यवहरति। एकस्य कर्तव्यमपरस्य अधिकारो भवति। एवं परस्परं भावयन्तः जनाः 'सम्यक् सरतीति संसारः' इति मतमङ्गीकुर्वन्ति।

भारतभूमिः कर्मभूमिः भवति। अन्या भोगभूमिः। परन्तु अधुना वर्णसङ्करसमाजे[१] सामाजिकनियन्त्रणस्य अभावः दरीदृश्यते। वस्तुवादिनः जनाः संवेदनहीनाः सञ्जाताः। अतः अस्मिन्नवसरे श्रीपाददामोदरसातवलेकर-महोदयस्य वेदमन्त्राणां सामाजिकव्याख्या अतीवोपयोगिनी प्रतिभाति। यथा—

अग्निः देवानां मुखं यं विना यज्ञसम्पादनं भवितुं नार्हति। सोऽध्यात्मदृष्ट्या परमेश्वरः शरीरदृष्ट्या जीवात्मा जठराग्निः वा, अधिदैवतदृष्ट्या पार्थिवाग्निः, विद्युत्, सूर्यो वा, अधिभूतदृष्ट्या विद्वान्, सेनाध्यक्षः, राजा, सेनापतिः, वैद्यः, योगी, न्यायाधीशः, अध्यापकः, उपदेशकः नेता वा।

**१. स नः पितेव सूनवेऽग्ने सूपायनो भव। सचस्वा नः स्वस्तये** (ऋ. १.१.९) मन्त्रस्य अन्वर्थो भवति–हे अग्ने, सः त्वं सूनवे पिता इव नः सूपायनो भव नः स्वस्तये आ सचस्व।

अस्य भावार्थो भवति यथा पिता पुत्रस्य कल्याणकार्येषु सहायको भवति, तथैव अग्निः विदुषां लोकमङ्गलकार्येषु सहायको भवेत्।।

**२. उत ब्रुवन्तु नो निदो निरन्यतश्चिदारत। दधाना इन्द्र इद् दुवः** (ऋ. १.४.५) मन्त्रस्य अन्वर्थो भवति–उत नः निदः ब्रुवन्तु अन्यतः चित् निः आरत इन्द्रे इत् दुवः दधानाः।

अस्य भावार्थो भवति–देवनिन्दकाः नास्तिकाः ईश्वरभक्तान् आस्तिक-जनान् समाजाद् विताडयन्ति चेत्, ते इन्द्रे (ईश्वरे) भक्तिं नैव त्यजेयुः।

**३. आ त्वेता नि षीदतेन्द्रमभि प्र गायत। सखायः स्तोमवाहसः** (ऋ. १.५.१) अस्य अन्वर्थः–हे स्तोमवाहसः सखायः आ तु इति निषीदत। इन्द्रम् अभि प्र गायत।

---

१. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः (गी. ४.१३)

अस्य भावार्थः–सामुदायिकोपासनया सङ्घशक्तिः वर्धते। सङ्घे शक्तिः कलौ युगे। अतः तथैव व्यवहर्तव्यम्।

**४. समोहे वा य आशत नरस्तोकस्य सनितौ। विप्रासो वा धियायवः।** (ऋ. १.२.६) अस्य अन्वर्थः – ये नरः समीहे आशत अर्थात् ये नेतारः युद्धरताः, तोकस्य वा सनितौ अर्थात् पुत्रस्य सुव्यवस्थायां सन्निहिताः, धियायवः वा विप्रासः अर्थाद् ये बुद्धिमन्तः, ते सर्वे आदरणीयाः भवन्ति।

अस्य भावार्थः – ये राष्ट्रनायकाः बहिर्शत्रोः देशं रक्षन्ति, ये मन्त्रिणः प्रजानां हितार्थं कार्यं कुर्वन्ति, तथा ये नेतारः नाम विद्वांसः ज्ञानस्य प्रसाराय प्रयासरताः, ते सर्वे प्रशंसार्हाः।

**५. तान् यजत्रां ऋतावृधोऽग्ने पत्नीवतस्कृधि। मध्वः सुजिह्व पायय** (ऋ. १.१४.७) अस्य अन्वर्थः – हे सुजिह्व अग्ने, तान् यजत्रान् ऋतावृधः पत्नीवतः कृधि, मध्वः पायय।

अस्य भावार्थः–अग्निः यज्ञकर्तृभ्यः सत्यपालकेभ्यः जनेभ्यः सर्वविधसांसारिकं सुखं प्रयच्छति।

**६. इमा धाना घृतस्नुवो हरी इहोपवक्षतः। इन्द्रं सुखतमे रथे** (ऋ. १.१६.१) अस्य अन्वर्थः – इमा घृतस्नुवः धानाः। इन्द्रं सुखतमे रथे इह हरी उपवक्षतः।

अस्य भावार्थः – धान्येव पुष्टाः शासकाः सम्यक् राज्यशासनं कर्त्तुं प्रभवन्ति।

**७. स घा वीरो न रिष्यति यमिन्द्रो ब्रह्मणस्पतिः सोमो हिनोति मर्त्यम्** (ऋ. १.१८.४) अस्य अन्वर्थः – यं मर्त्यः इन्द्रः ब्रह्मणस्पतिः सोमः च हिनोति सः घा वीरः न रिष्यति।

अस्य भावार्थः – यस्मै मनुष्याय शक्तिशाली इन्द्रः विद्वान् ब्रह्मणस्पतिः, धनवान् सोमः च सहायतां प्रयच्छन्ति, तस्य विनाशः न भवति। अपि तु स वर्धते।

**८. अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे। पृथिव्याः सप्त धामभिः** (ऋ. १.२२.१६) अस्य अन्वर्थः – विष्णुः सप्त धामभिः यतः पृथिव्याः विचक्रमे, अतः न देवाः अवन्तु।

अस्य भावार्थः – व्याप्नोति इति विष्णुः। पृथिवी – अप् – तेजो – वायु – आकाश – तन्मात्रा – महत्तत्त्वानि च सप्त धामानि। विष्णुः सर्वत्र व्यापकः सन् देवान् अस्माकं सहायतार्थं प्रेरयति।

**९. अप्स्वन्तरमृतमप्सु भेषजमपामुत प्रशस्तये। देवा भवत वाजिनः** (ऋ. १.२३.१९) अस्य अन्वर्थः – अप्सु अन्तः अमृतं, अप्सु भेषजं, उत अपां प्रशस्तये देवाः वाजिनः भवत। अस्य भावार्थः – जले अमृतमस्ति, अर्थाद् अपमृत्युं वारयितुं सामर्थ्यमस्ति तस्मिन् औषधीनां गुणाः सन्निविष्टाः सन्ति। किं वा मनुष्याः, देवाः तस्य स्तुत्यर्थं मुखराः भवन्ति।

**१०. अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः। नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः।।** (ऋ. १.२४.७)

अस्य अन्वर्थः – पूतदक्षः राजा वरुणः वनस्य स्तूपं अबुध्ने ऊर्ध्वं ददते। नीचिनाः स्थुः। एषां बुध्नः उपरि। अस्मे अन्तः केतवः निहताः स्युः।

अस्य अन्वर्थः – पूतदक्षः राजा वरुणः जलस्य आधारभूतं सूर्यम् आधारं विना ऊर्ध्वदेशे स्थापयति। तस्य सूर्यस्य किरणा अधःदेशमागच्छन्ति। एतेषां मूलं सूर्यः उपरि तिष्ठति। तस्य किरणा अन्तरिक्षदेशेऽपि प्रकाशिता भवन्ति।

यदि वेदार्थमन्यतमप्रक्रियाया अनुशीलनं क्रियते, तर्हि ज्ञायते यद् वेदमन्त्रा मुख्यरूपेण अधिदैवत-अध्यात्म-अधियज्ञ-नैरुक्त-ऐतिहासिकभेदेन वेदभाष्यकारैर्व्याख्याताः। पाश्चात्यास्तु भिन्नसरण्यां वेदमन्त्रान् व्याख्यान्ति। तेषां व्याख्यानपद्धतौ निरुक्तब्राह्मणादिग्रन्थानां प्राधान्यमनुभूयते। यदि प्राच्यपाश्चात्यविद्वद्भिः कृतपरिश्रममवलोक्य मनसि निधाय वेदाध्ययनं क्रियते, तर्हि वेदमन्त्राणां गूढार्था अस्माकं पुरतः स्फुटाः भविष्यन्ति।

एवं स्थालीपुलाकन्यायेन विशालवैदिकवाङ्मयस्य सामान्योदाहरणानि सामजिकोत्थानदृष्ट्या प्रतिपादितानि। कथ्यते च–**'मेघे माघे गतं वयः'**। किं वा कथयामः वैदिकवाङ्मयविषये। तथापि वेदकालीनसमाजस्य पर्यालोचनया एतत् प्रतिभाति यत् तदानीं सामाजिकार्थिकराजनीतिकस्थितिः तथा सुदृढाऽऽसीत्, यया विद्वांसः पारलौकिकगूढरहस्यविषये चिन्तयितुं प्रयासरताः अभवन्। अधुना यदा वैज्ञानिकोद्भावनया सामाजिकजीवनं सहजसाध्यं सञ्जातं 'वसुधैव कुटुम्बकम्' भावं विस्मृत्य जनाः अधिकमिष्ठान्नभक्षणानन्तरं यथा तिंतिण्डीमिच्छन्ति, तथैव संयमाभावात् परस्परविनाशस्य कारणभूताः भवन्ति। सर्वत्र अविश्वासः असुरक्षा अमनोयोगिता च परिलक्ष्यते। अतः वेदस्य आलोडनमत्यावश्यकं प्रतिभाति। वेदं विना न विदुषां गतिरिति।

**सहायकग्रन्थसूची**

१. ऋग्वेदसंहिता, स्वाध्यायमण्डल, पारडी, १९८५।
२. ईशादि नौ उपनिषद्, गीताप्रेस।
३. ऋग्वेदभाष्यभूमिका।
४. निरुक्तम्।
५. याज्ञवल्क्यस्मृतिः।
६. पाणिनीयशिक्षा।
७. महाभाष्यम्, चौखम्बा विद्याभवनम्, वाराणसी, २००३।
८. जैमिनीयन्यायमाला।
९. श्रीमद्भगवद्गीता, गीताप्रेस।
१०. वेदभाष्यकारों की वेदार्थ – प्रक्रियाएँ, डॉ. रामनाथ वेदालङ्कार।
११. ऋग्वेदप्रथममण्डलस्य सायणवेङ्कटमाधवभाष्ययोः तुलनात्मकमध्ययनम्, शैव-भारती शोध प्रतिष्ठानम्, जंगमवाडी, वाराणसी, २०००।



# वैदिकसाहित्ये संस्कृतविदुषीणां भूमिका

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।**

विद् ज्ञाने, विद् सत्तायां, विद् विदारणे, विद्लृ लाभे इति धातुभ्यः ज्ञानार्थकस्य वेदशब्दस्य व्युत्पत्तिः। अस्मात् ज्ञायते यद् येन सांसारिकज्ञानं प्राप्य मात्रायाः विदारणं कृत्वा मोक्षप्राप्त्यर्थं ज्ञानी समर्थो भवति, स वेदः। अतः उक्तमस्ति **'सा विद्या या विमुक्तये'**। ऋग्यजुःसामाथर्वाख्याः चत्वारो वेदाः प्रत्येकं संहिताब्राह्मणारण्यकोपनिषद्नाम्ना विषयदृष्ट्या चतुर्धा विभज्यन्ते। तत्र संहितायां स्तुतिः, ब्राह्मणे कर्म, आरण्यके उपासना, उपनिषदि च ज्ञानं प्रतिपादितमस्ति। संहितायाः अपरं नाम मन्त्रः। ब्राह्मणग्रन्थे ब्राह्मणारण्यकोपनिषदामन्तर्भावः भवति। अतः उच्यते, **'मन्त्रब्राह्मणयोः वेदनामधेयम्'**। संहिताब्राह्मणारण्यकानां ज्ञानं लब्ध्वा जनः धर्मार्थकामान् इति त्रीन् पुरुषार्थान् प्राप्तुं समर्थो भवति[१]। अतः एते अविद्या इति परिचिताः। किन्तु उपनिषदः ज्ञानेन जनः मोक्ष इति चतुर्थं पुरुषार्थं प्राप्तुं शक्नोति, अतः तस्य नाम विद्या। **'विद्यां चाविद्यां च यस्तद् वेदोभयं सह अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'**[२]।

कालः निरवधिः। तथापि घटितानां कर्मणां दृष्ट्या अतीत-वर्तमान-भविष्यकृतिः त्रिधा विभक्तोऽयं कालः भारतवर्षस्य परिचयभूतं संस्कृत-साहित्यं वैदिक-मध्यकालीन-आधुनिकनाम्ना त्रिधा विभाजयति। **'योऽनुचानो स नो महान्'** इति उक्तिः शिक्षा-कल्प-व्याकरण-निरुक्त-छन्द-ज्योतिषमिति षडङ्गैः सह वेदान् वैदिकसाहित्यकोट्यां परिगणयति, यतो हि शिक्षाशास्त्रमुच्चारणं शिक्षयति। श्रौत-गृह्य-धर्म-शुल्बसूत्रयुक्तः कल्पः यज्ञानुष्ठानविषये कथयति। ज्योतिषशास्त्रं यज्ञानुष्ठानस्य कालनिर्धारणं करोति। व्याकरणं शब्दानां व्युत्पत्तिं वर्णयति। तत्र निरुक्तं **'नामानि आख्यातजानि'** इति शब्दानां धातुमूलकमर्थं निष्कासयति। छन्दः

---

१. संस्कृतं संस्कृतिश्चैव द्वे प्रतिष्ठे राष्ट्रस्य मे।

२. ईशोपनिषद्–११

मन्त्राणामुच्चारणमुदात्तानुदात्तस्वरितस्वरदृष्ट्या शिक्षयति। तत्र यज्ञः प्रमुखो भवति (यज्ञो वै सः[१]), यत्र अग्नौ विभिन्नदेवतानां कृते उद्देश्यसिद्ध्यर्थं हविः प्रदीयते। मन्त्रोच्चारणेन यज्ञानुष्ठानः क्रियते। उच्चारणे त्रुटिः भवति चेत् महान् अनर्थः भवति। अतः उक्तमस्ति **मन्त्रहीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तः न तमर्थमाह। स वाग्वज्रः यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्**[२]। अतः सम्यक् उच्चारणज्ञानस्य आवश्यकताऽस्ति। अर्थज्ञानं विना विद्या व्यर्था भवति। यतो हि **'स्थाणुरयं भारहारः किलाऽभूत्, अधीत्य वेदं यो विजानाति न अर्थम्। स अर्थज्ञः सकलं भद्रमश्नुते, नाकमेति ज्ञानविधूतपाप्मा**[३]। व्युत्पत्तिगतं ज्ञानं न भवति चेत् प्रकृतिवद् विकृतियज्ञान् अनुष्ठातुमृत्विक् समर्थः न स्यात् छन्दज्ञानं विना मन्त्रोच्चारणं न प्रवर्तते। वेदस्य अपरं नाम **छन्दस्** भवति। सूर्योदयात् पूर्वं पश्चात् वा यज्ञारम्भः कुर्यात् इति शङ्कायां **श्रुतिस्मृतिविवादे तु श्रुतिरेव गरीयसीः**[४] इति उक्तिः कालनिर्धारणस्य प्राधान्यं प्रतिपादयति। अस्यां स्थितौ वेदावबोधनार्थं वेदाङ्गानामावश्यकता अनुभूयते। अतः एतानि वै पुरुषस्य अङ्गरूपेण परिगणितानि सन्ति। यथा अङ्गाद् अङ्गैः वा स्वरूपस्य ज्ञानं भवति, तथैव षडङ्गानामध्ययनान्तरं वेदार्थो स्पष्टो भवति। अतः उक्तमस्ति, **'शिक्षा घ्राणं तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते। ज्योतिषमयनं चक्षुः, निरुक्तं श्रोत्रमुच्यते। छन्दः पादौ तु वेदस्य, मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते**[५]। परन्तु अधुना त्वरा अस्ति। जनाः साक्षाद् वेदं पठित्वा त्वरितपण्डिताः सन्तः **'विद्या भारः क्रियां विना'** इति विचिन्त्य मन्त्राणां प्रयोगं कुर्वन्ति। येन बहुव्ययेन अनुष्ठियमानैः यज्ञैः कार्यसिद्धिः न भवति।

**'वेदोऽखिलं धर्ममूलम्'** इति उच्यते। **धर्मः धारयते प्रजाः**। धर्मस्य कर्तव्यनियमानुष्ठानभेदेन अर्थत्रयं भवति। धर्मज्ञानं विना जनः स्वकर्तव्यविषये न जानाति। अनुसरणीयानां नियमानां ज्ञानाभावेन त्रुटियुक्तं कार्यं करोति। तथैव यज्ञानुष्ठाने त्रुटिः भवति, येन **सर्वा निष्फला क्रिया**

---

१. यज्ञेन यज्ञमजयन्त देवाः। पु.सू.
२. पाणिनीयशिक्षा
३. ऋ.भा.भूमिका
४. मनुस्मृतिः
५. पा.शिक्षा।

भवति। **'वेदोऽखिलं ज्ञानमूलं'** भवति। प्राक् सर्वेषां कृते वेदाध्ययनस्य व्यवस्था आसीत्। शतपथब्राह्मणे **निर्वापितस्य गार्ह्यपत्याग्नेः याज्ञिकः धनिकस्य शूद्रस्य गृहाद् अग्निचयनं कुर्यादिति** यद् उल्लेखमस्ति, तस्मात् कर्मानुसारं वर्णविभाजनमाश्रमव्यवस्थां विश्वसन्तः सर्वे आर्याः यज्ञानुष्ठानं कृतवन्तः इति स्पष्टं भवति। वेदस्य अपरं नाम श्रुतिः भवति, यतो हि प्रथमतः गुरुशिष्यपरम्परया गुरोः मुखाद् उच्चारणं श्रुत्वा शिष्यः ज्ञानाहरणमकरोत्। परन्तु कालक्रमेण वेदकलेवरस्य वृद्धिः सञ्जाता, येन ब्रह्मचर्याश्रमः बहुकालपेक्षी अभवत्। पुनश्च स्तुतौ भावः दृश्यते न तु उच्चारणं परिगण्यते। परवर्तिकाले उच्चारणोपरि गुरुत्वं दत्तम्। उच्चारणे त्रुटिः भवति चेद् यजमानस्य महती क्षतिः भविष्यतीति विश्वासः सञ्जातः। दीर्घकालं यावद् गुरुकुले स्थित्वा वेदाध्ययनं कर्तुं कन्याः असमर्थाः सञ्जाताः। काले याः मन्त्रान् द्रष्टुं समर्थाः आसन्, ताः वेदाध्ययनाद् वञ्चिताः अभवन्। वेदेषु गार्गी-लोपामुद्रा-मैत्रेयी-कात्यायनी-विश्ववारा-अपाला-घोषा-अदिति-प्रभृतीनां नारीकवीनां नामोल्लेखः एतत् प्रमाणयति। यतो हि **कवयः क्रान्तद्रष्टारः**। कन्यानां विभाजनं द्विधा सञ्जातम्। सद्योद्वाहा ब्रह्मवादिन्यश्च। सद्योद्वाहा सामान्यज्ञानानन्तरं विवाहं कृत्वा गार्ह्यस्थाश्रमे प्रविष्टा भवति स्म। ब्रह्मवादिनी गुरुकुले आजीवनं स्थित्वा ब्रह्म नाम शब्दब्रह्म वेदाध्ययनं कुर्वन्ति स्म।

जीविकादृष्ट्या जनाः ज्ञानोपजीविनः कर्मोपजीविनः इति द्विधा विभज्यन्ते। ये अध्ययनं कुर्वन्ति, अध्यापयन्ति ते ब्राह्मणाः। ये अन्तः-बहिर्शत्रुभ्यः जनान् रक्षन्ति, ते क्षत्रियाः। ये कृषि-वाणिज्य-पशुपालनं कृत्वा समाजं राष्ट्रं वा समृद्धं कुर्वन्ति, ये वैश्याः। ये एतानि कार्याणि विहाय अन्यत् कर्म नाम शारीरिकश्रमं कुर्वन्ति, ते शूद्राः इति परिचिताः आसन्। प्रथमतः वर्णव्यवस्था कर्मानुसारमासीत्। पश्चाज्जन्मानुसारमभवत्। येन शारीरिककर्म कुर्वाणः शूद्राः वेदाध्ययनं कृत्वा कालक्षेपं कर्तुं नैव चेष्ठितवन्तः। यतो हि सहजेन पितुः सकाशाद् अपेक्षितं ज्ञानं प्राप्तवन्तः। अनेन प्रकारेण स्त्री-शूद्राः केवलं शारीरिककर्मणि व्यापृताः वेदाध्ययनाद् वञ्चिताः सञ्जाताः। अद्यापि यः निरक्षरः अज्ञः अज्ञानी वा स समाजे निरादृतः भवति। तथैवाभवत् तयोः स्थितिः **'प्रक्षालनात् हि पादस्य दूराद् अस्पर्शनं**

**वरम्'** इति नीत्या वेदाध्ययनात् तौ वञ्चितौ। मनुस्मृतिकारः सामाजिक-स्थित्यनुसारं **स्त्रीशूद्राणां वेदाध्ययने अधिकारः नास्तीति** नियमं प्रणीतवान्। ततः प्रभृति क्षिप्रेण न केवलं विद्यायाः समाजस्य अवनतिरपि सञ्जाता।

विद्यायाः अभावेन मातरः सुयोग्यानां सन्तानानां जन्म परिपालनं च कर्तुमसमर्था अभवन्। माता पुत्रस्य प्रथमगुरुः भवति। मातॄणां ज्ञानाभावेन सामाजिकार्थिकराजनीतिकक्षेत्रे क्रियमाणानां कर्मणां ज्ञानं कारयितुमसमर्थाः ताः समाजस्य अधःपतनस्य कारणभूताः परिगणिताः अभवन्। समाजस्य मूलभूतस्य परिवारस्य साम्राज्ञीरूपेण स्तुता नारी अवहेलिता अभूत्[1]।

ज्ञानस्य अन्वेषणं मानवस्य जन्मजातप्रवृत्तिः भवति। **'इतिहास-पुराणाभ्यां वेदं समुपबृंहयेत्। बिभेत्यल्प श्रुताद् वेदो मामयं प्रहरिष्यतीति'** बुद्ध्या वेदव्यासेन विरचितानां महाभारतपुराणादीनामध्ययनं कृत्वा नार्यः तेषु वर्णितेभ्यः नारीचरितेभ्यः प्रेरणां प्राप्तवत्यः। **पतिं धर्ममार्गे नयतीति पत्नी** उच्यते[2] रामायणे **सीता** दशरथस्य राज्ञः पिण्डदानं कृतवती। कौशल्या पुत्र-प्राप्त्यर्थं व्रतमाचरितवती। तारा-मन्दोदरीप्रभृतयः नार्यः कार्यकाले सम्यक् उपदिष्टवती। तथैव महाभारते कुन्तीद्रौपदीप्रभृतयः राजनीतौ साक्षात् संश्लिष्टाः अभवन्। अनसूया सावित्री च मृतव्यक्तेः जीवनसञ्चारं कृतवत्यौ। **अनादिनिधनानित्या, वागित्युपदिष्टा स्वयम्भुवा, आदौ वेदमयी दिव्या, यतः सर्वा प्रवृत्तयः** इति अनादिकालतः वैदिकपरम्परा अद्यावधिः घात-प्रतिघातं सोढ्वा तिष्ठति। रथः चक्रेण चलितुमसमर्थः। अतः संसाररूपकस्य रथस्य सुगमनार्थमुभययोः स्त्रीपुरुषयोः आवश्यकता अस्ति। **शस्त्रेण रक्षिते राज्ये शास्त्रचर्चा प्रवर्तते।** इति मनसि निधाय राज्ञी लक्ष्मीबाई राष्ट्रं रक्षितुमाङ्ग्लसैनिकैः साकं युद्धं कृतवती। अवसरप्रदानेन ज्ञानं वर्द्धते इति कृत्वा राज्ञी अहिल्याबाई मन्दिराणां धर्मशालानां स्थापनां कृतवती, यतो हि एतानि स्थानानि विद्यामन्दिराणि अपि आसन्।

वैदेशिकानामाक्रमणेन अस्माकं संस्कृतिः विकृता सञ्जाता। मुसलमानशासकाः आक्रमणकारिणः शास्त्राणि पुस्तकालयान् ब्राह्मणान् विनाशितवन्तः। अन्यपक्षे औरङ्गजेबस्य पुत्रः दाराशिकोहः ५४ उपनिषदः

---

१. अथर्ववेदः–१४ २. निरुक्तम्

फारसी भाषायामनुदितवान् येन पाश्चात्या: भारतीयज्ञानं प्रति आकृष्टाः सन्तः अन्वेषणमनुध्यानमध्ययनं च कर्तुं प्रवृताः अभवन्। अद्य भारताद् बहिः ५४ विश्वविद्यालयेषु भारतीयविद्यानाम्ना संस्कृतस्य अध्ययनं प्रचलति। न केवलं भारतीयविदुष्यः, अपि तु वैदेशिकाः संस्कृतं प्रति अनुरक्ताः सञ्जाताः।

तथापि अद्यापि तथाकथिताः परम्परावादिनः आप्राणं चेष्ठन्ते यथा नार्यः वेदाध्ययनं न करिष्यन्तीति। कालः अनतिक्रमणीयो भवति। परिवर्तनमवश्यम्भावी। सर्वस्मिन् राज्ये संस्कृतं पाठ्यते। परन्तु बहुत्र प्रादेशिकभाषाः अध्यापनस्य माध्यमरूपेण स्वीकृताः सन्ति। श्रवणं ज्ञानाहरणस्य प्रमुखं माध्यमं भवति। श्रवणं विना स्वाध्यायं कर्तुं क्लिष्टं विषयमालोचयितुं संस्कृतस्य छात्राः असमर्थाः सन्तः विमुखाः भवन्ति। अस्यां स्थितौ सर्वकारस्य आन्तरिकतायाः सहयोगस्य नियमप्रणयनस्य आवश्यकता दरीदृश्यते।

एवं वैदिकसाहित्यस्य संरक्षणं वेदकाले मन्त्रं दृष्ट्वा, मध्यवर्तिकाले व्रतोपवासादीन् कृत्वा आधुनिककाले अध्ययनमध्यापनं च कृत्वा विदुष्यः कुर्वन्ति कारयन्ति। ऋषयः मन्त्रद्रष्टारः न तु कर्तारः इति यदुक्तमस्ति तदनुसारं वेदः 'अपौरुषेयः' इति प्रसिद्धम्। आधुनिकयुगे वेदस्य संरक्षणं त्रिधा भवति। साधारणछात्राः पाठ्यक्रमे उल्लिखितानामंशानामध्ययनं श्रवणं मननं निदिध्यासनं कुर्वन्ति। वेदपाठिनः परम्परानुसारं गुरुमुखात् श्रुत्वा शाखानुसारं वेदं कण्ठस्थीकुर्वन्ति। अनुसन्धातारः अनुशीलनं कृत्वा प्रमाणीकुर्वन्ति यद् अतीते यद् उत्कृष्टं ज्ञानमासीत् परम्परायाः संरक्षणस्य अभावेन वयं मनुष्याः तथा संसारस्य सर्वतः विकासं कर्तुं कारयितुं च असमर्थाः। अतः गहनाध्ययनस्य आवश्यकता अस्ति। यथा धर्मशास्त्रे एकत्र उच्यते **'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः'** अन्यत्र उच्यते **'न स्त्री स्वातन्त्र्यमर्हति'** तथैव समाजे अद्यापि प्रतिष्ठिताः जनाः वेदाध्ययने नारीणां प्रवेशं नाङ्गीकुर्वन्ति, अपरत्र वैदिकसाहित्ये संस्कृतविदुषीणां भूमिकाविषये आलोचनाचक्रं प्रचलति। वैदिकसाहित्यं संहितायाः वेदाङ्गानि यावत्, पुनश्च उपबृंहकत्वेन पुराणसाहित्यं, ततः अनुवादसाहित्यमपि अङ्गीकरोति।

अतः वैदिकसाहित्यस्य संरक्षणार्थं संस्कृतविदुषीणां भूमिका प्रशंसार्हा भवति।

*

# उपवेदः आयुर्वेदः

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते।**
**एनं विदन्ति वेदेन तस्मात् वेदस्य वेदता।।**

'विद् ज्ञाने' 'विद्लृ लाभे' 'विद् विदारणे' 'विद् सत्तायाम्' धातुभ्यः वेदशब्दस्य व्युत्पत्तिः, यस्यार्थो भवति ज्ञानलाभेन सांसारिकबन्धनेभ्यः मुक्तः सन् मोक्षप्राप्तिः। **अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते**[१]। ऋग्यजुसामाथर्वनाम्ना परिचितः वेदः निगमागमनाम्नाऽपि ख्यातः। चतुर्दश-विद्यासु 'अङ्गानि वेदाः चत्वारः[२] मीमांसा न्यायविस्तरः, इतिहासः पुराणञ्च विद्या ह्येता चतुर्दश' इति चत्वारः वेदाः, शिक्षा-कल्प-निरुक्त-व्याकरण-ज्योतिष-छन्दांसि षडङ्गानि, मीमांसा, न्यायशास्त्रम्, इतिहासः पुराणं च आगच्छन्ति। अष्टादशविद्यानां गणनाप्रसङ्गे उपवेदानां ग्रहणं भवति। **वेदोऽखिलं ज्ञानमूलम्**[३] इति सकलशास्त्राणां मूलं वेदे निहितमस्ति। वेदेषु वर्णितेषु विषयेषु प्रमुखाणां व्याख्यानमालोचनं च तत् तद् उपवेदेषु भवति। ऋग्वेदस्य आयुर्वेदः, यजुर्वेदस्य धनुर्वेदः, सामवेदस्य गन्धर्ववेदः अथर्ववेदस्य स्थापत्यवेदश्च उपवेदरूपेण ख्याताः सन्ति[४]। अथर्ववेद अथर्वाङ्गिरसवेदः, आङ्गिरसवेदः, ब्रह्मवेदः, भृग्वङ्गिरोवेदः, छन्दोवेदः, महीवेदः, क्षत्रवेदः, भैषज्यवेद इति नामस्वपि ख्यातोऽस्ति। रोगस्य निदानं, तस्य उपचारः निवारणं चाथर्ववेदस्य २० काण्डेषु प्रमुखविषयाः भवन्ति। यद्यपि प्राचीनतमः[५] ऋग्वेदः सकलशास्त्राणां मूलभूतः सन् आयुर्वेदस्य स्रोतः परिगणितः, तथापि नैके आयुर्वेदम् अथर्ववेदस्य उपवेदत्वेन स्वीकुर्वन्ति। एति गच्छतीति आयुः (इण्+उसि एतेर्णिच्च)। [६]चैतन्यानुवर्तनमायुः[७] शरीरजीवयोर्योगो जीवनम्, तेनावच्छिन्नः काल

---

१. ईशोप-३ २. निरुक्तम्
३. ऋ.भा.भू.
४. आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।
५. अनन्ता वै वेदाः-तैति. ब्रा.
६. उ. २.२८३ ७. च.सू. ३०.२२

आयु:। आयुषो वेदः आयुर्वेद:। आयुर्वेदयत्यायुर्वेदः **हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्। मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते**[१]। आयुरस्मिन् विद्यते, अनेन वाऽऽयुर्विन्दन्ति इत्यायुर्वेदः[२]। अतः इह खल्वायुर्वेदं नामोपाङ्गमथर्ववेदस्यानुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्याय-सहस्रं च कृतवान् स्वयम्भूः इति सुश्रुतसंहितायाम्[३], आयुर्वेदः अथर्ववेदस्य उपाङ्गत्वमुपवेदत्वं पुनश्च ब्रह्मणा सृष्टः इति कृत्वा सर्वग्राह्यत्वमपि सूचयति। चरकसंहिताऽपि **सोऽयमायुर्वेदः शाश्वतो निर्दिश्यते, अनादित्वात् स्वभावसंसिद्धलक्षणत्वात्, भावस्वभावनित्यत्वाच्च**[४] उल्लिखितम्। सिद्धान्तो नाम **स यः परीक्षकैर्बहुविधं परीक्ष्य हेतुभिश्च साधयित्वा स्थाप्यते निर्णयः**[५] इति कृत्वा **अनेन पुरुषो यस्मादायुर्विन्दति वेत्ति च। तस्मान्मुनिवरैरेष आयुर्वेद इति स्मृतः**[६] कथितमस्ति।

**ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः।**
**जग्राह निखिलेनादावश्विनौ तु पुनस्ततः।।**
**अश्विभ्यां भगवाच्छक्रः प्रतिपेदे ह केवलम्।**
**ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत्**[७]।।

इति ब्रह्मणः अश्विनीकुमारौ ततः शक्रः, तस्मात् च ऋषिः भरद्वाजः आयुर्वेदशास्त्रं ज्ञात्वा **आयुर्वेदं भरद्वाजात्प्राप्तेर्भिषजां क्रियाम्। तमष्टधा पुनर्व्यस्य शिष्येभ्यः प्रत्यपादयत्**[८] इति प्रचारितवान्। ब्रह्मा दक्षप्रजापतिं सिद्धान्तान् भास्करं च चिकित्सापद्धतिमध्यापयत्। क्षीणा वर्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्याः [९]इति प्रयोजनं चास्य स्वस्थस्य स्वास्थ्यरक्षणमातुरस्य विकारप्रशमनं [१०]च।

शल्य-शालाक्य-कायचिकित्सा-भूतविद्या-कौमारभृत्य-अगदतन्त्र-रसायनतन्त्र-वाजीकरणानि च भारतीयचिकित्सापद्धतेः अष्टौ विभागाः

---

१. च.सू. १.४१
२. सू.सू. १.१५
३. सू.सं.सू. १.६
४. च.सं.सू. ३०.२७
५. च.वि. ८.३७
६. भावप्रकाशः
७. च.सं.सू. १.४-५
८. महाभारतम्
९. अष्टाङ्गसंग्रहः, सू. २०
१०. च.सू. ३०.२६

भवन्ति। तत्र मूत्र-पुरीषनिरोधे सति चर्मशलाकया लौहशलाकया दर्भेण वा शल्यक्रियायाः उल्लेखमथर्ववेदादिशास्त्रेषु अस्ति[१]। ग्रीवायाः शीर्षं यावत् (ENT) उपचारः शालाक्यचिकित्सया भवति। (जरायुजः[२], आवयो अनावयः, क्षीरलेहमाङ्के.....उदरादिशरीरसम्बन्धितचिकित्सा कायचिकित्सा कथ्यते। चङ्क्रममृत्तिकया मर्दनं धूपनं च कृत्वा पक्षाघातरोगे चिकित्सा क्रियते[३]। भूतादिभयेन पीडितं जनं सदम्पुष्पामणिबन्धनेन भयमुक्तं करोति चिकित्सकः[४]। बालरोगाणां चिकित्सा कौमारभृत्यः उच्यते। कृमीणां निवारणार्थं बालकस्य नवनीतप्राशनं कुर्यात्[५]। विषतन्त्रस्य अपरं नाम अगदतन्त्रम्। स्कन्दनामकस्य विषस्य निवारणं वारिदं वारयातै[६] मन्त्रेण अभिमन्त्रितेन जलेन भवति। पौष्टिककर्मणि धातूनां निर्माणोपयोगिप्रक्रियायाः उल्लेखमस्ति। हिरण्यमणिधारणेन आयुषः वर्चसश्च वृद्धिः भवति[७]। वीर्य–शक्तिप्राप्त्यर्थं क्रियमाणा चिकित्सा वाजीकरणं भवति। सर्वसुरभिचूर्णस्य उल्लेखं **निर्दुरर्मण्य**[८] मन्त्रे भवति।

**हिताहितं सुखं दुःखमायुस्तस्य हिताहितम्।**
**मानं च तच्च यत्रोक्तमायुर्वेदः स उच्यते।।**[९]

गुणदोषैः क्षीणाः वर्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्या इति प्रयोजनं भवति आयुर्वेदस्य। अतोऽत्र समग्राणां मनुष्याणामायुः सुखायुः–दुःखायुः–हितायुः–अहितायुरिति चतुर्धा विभक्तमस्ति। तत्र शारीरिक–मानसिकरोगैः सम्पूर्णमुक्तस्यायुः सुखायुः भवति। रोगग्रस्तस्यायुः दुःखायुः भवति। हितैषिणामायुः हितायुः भवति। तद्विपरीतस्यायुः अहितायुः भवति।

प्राणायामस्य आवश्यकता आरोग्यार्थमपरिहार्यम्। **धर्मार्थकाम-मोक्षाणामारोग्यं** मूलमुत्तममिति चतुर्वर्गफलप्राप्त्यर्थमारोग्यम् अरोग्यार्थं

---

१. कौ.गृ.सू. २५.१५, २७.२३
२. अथर्व १.१२.१, ६.१६.१, कौ.गृ. ३०.५
३. कौ.गृ.सू. ३१.१८-१९
४. कौ.गृ.सू. २८.७
५. कौ.गृ.सू. ३२.१
६. अथर्व. ४.७.१
७. अथर्व. १६.२६.३
८. अथर्व. १६.२.१
९. च.सू. १.४१

प्राणायामश्च उपयोगी भवति। प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम्[१]। तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः[२]।

**सूर्य आत्मा जगतस्तस्थुषश्च**[३]। अतः सहस्ररश्मिः शतधा वर्तमानः। प्राणः प्रजानामुदेत्येष सूर्यः[४] इति बहुत्र स्तुतिभिः गीयते सूर्यस्य महिमा। 'उद्वयं तमसस्परि स्वः पश्यन्त उत्तरम्। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्[५]' इति यजुर्वेदः। 'यो जागार तमृचः कामयन्ते[६]' ऋक्।

सर्वोपनिषदां सारभूता गीता कथयति 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु। युक्तस्वप्नावबोधस्य योगो भवति दुःखहा[७]' इति। 'व्रीहयश्च मे यवाश्च मे माषाश्च मे तिलाश्च मे.....यज्ञेन कल्पन्ताम्[८]' इति शस्यानां नामोल्लेख अस्ति। **आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः**[९] इति छान्दोग्यानुसारं आहारान् मेदशोणित-मनसां विकाराः। अतः सत्त्व-रज-तमोगुणयुक्तस्यान्नस्य विचारोपरान्तं ग्रहणं करणीयमिति उपदेशः। यतो हि यत्क्रतु (संकल्पः) र्भवति तत्कर्म कुरुते, यत् कर्म कुरुते तदभिनिष्पद्यते इति शास्त्रम्।

भोजनकालेऽपि सम्यक् उपवेशनस्यावश्यकताऽस्ति। यां दिशं प्रति मुखं क्रियते, तदनुसारं फलप्राप्तिः भवति। पुनश्च एकाग्रता पाचनक्रियायाः सहायतां करोति। भोजनादौ ओं भूपतये स्वाहा, ओं भुवनपतये स्वाहा, ओं भूतानां पतये स्वाहा इति त्रिधा प्रथमग्रासः स्वीकरणीयः। ओं प्राणाय स्वाहा, ओं अपानाय स्वाहा, ओं व्यानाय स्वाहा, ओं. उदानाय स्वाहा, ओं समानाय स्वाहा इति पञ्चवारेण द्वितीयग्रासः भवति चेत् भोजनं स्वादिष्टं सुपाच्यं स्वास्थ्यकरं च भवति। न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरमिति उपनिषदपि निगदति[१०]। अन्नस्य महिमा वेदेषु वर्णितोऽस्ति। अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः। प्र प्र दातारं तारिष

---

१. कूर्म उ. ११.३०
२. योगसूत्रं २.४
३. ऋ ६.६३.४, यजु. ७.४२
४. प्रश्नोप. १.८
५. यजु. २०.२१
६. ऋक्. ५.४४.१४
७. गीता ६.१७
८. यजुः १८.१२
९. छान्दो. ७.२६.२
१०. श्वेताश्व. २.१२

**ऊर्जं नो धेहि द्विपदे चतुष्पदे इति**[१]। अन्यपक्षे मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य। नार्यमणं पुष्यति नो सखायं **केवलाघो भवति केवलादी**[२] न दत्वा य भक्षयति, तस्य निन्दा क्रियते।

सूक्ष्मशरीरस्य अंशभूता अपि भोजनेन पुष्टाः भवन्ति। तत्र प्राणाय नमो यस्य सर्वमिदं वशे[३] इति प्राणानां गुरुत्वं व्यनक्ति। **यज्जाग्रतो दूरमुपैति दैवं**[४] इति मनसः क्षिप्रतां प्रदर्शयति। स्वस्थशरीरस्य कृते यथा भोजनस्य तथा निद्रायाः आवश्यकताऽस्ति (ज्योतिषा बाधते तमः)[५]।

ब्रह्मचर्यस्य पालनमाजीवनं सुखकरं भवति। ब्रह्मचर्येण तपसा देवा मृत्युमपाघ्नत। इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत्[६] इति देवेन्द्रस्य पराकाष्ठायाः कारणं ब्रह्मचर्यो भवति। छिद्रयुक्तपुरे शरीरे परमात्मा जीवात्मा रूपेण निवसति। पुरमेकादश द्वारमजस्यावक्रचेतसः। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते। एतद् वै तत्[७]।

**सप्त ऋषयः प्रतिहिताः शरीरे, सप्त रक्षन्ति सदमप्रमादम्।**
**सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ।।**[८]

यज्ञो वै विष्णुः[९] इति यज्ञस्य प्राधान्यं सूचयति। यज्ञः एका प्रक्रिया भवति यस्मात् नूतनं किमपि अपूर्वमुद्भवति। आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां चक्षुर्यज्ञेन कल्पतां श्रोत्रं यज्ञेन कल्पतां[१०] इति **कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः**[११] उक्ति समर्थयति।

भिषक् संयोजको भवति क्षीणा वर्धयितव्याः, वृद्धा ह्रासयितव्याः, समाः पालयितव्याः इति विचिन्त्य आयुर्वेदे वर्णितं ज्ञानं जनानामुपकाराय व्यवहरति। अतः **'या ते रुद्र शिवा तनू शिवा विश्वस्य भेषजी। शिवा रुद्रस्य भेषजी तया नो मृड जीवसे**[१२]**'** इति मन्त्रे रुद्रस्य प्रशंसा क्रियते।

---

१. यजु. ११.८३
२. ऋक् १०.११७.६
३. अथर्व. ११.४.१
४. यजु. ३४.१.६
५. ऋक्. १०.१२७.२
६. अथर्व ११.५.१६
७. कठो. २.२.१
८. यजु. ३४.५५
९. शतपथ.
१०. यजु. ६.२१
११. ईशो. २
१२. तै.सं.रु. २

त्वादत्तेभी रुद्र शंतमेभिः शतं हिमा अशीय भेषजेभिः।[१] उत्र वीराँ अर्पय भेषजेभिर्भिषक्तमं त्वा भिषजां शृणोमि।[२] प्रथमो दैव्यो भिषक्।[३]

स्वल्पमात्रं बहुगुणसम्पन्नं योग्यभेषजम्। यद्वै किञ्च मनुरवदत् तद्भेषजं भेषजतायाः[४]। ओषधिवनस्पतीनामनूक्तान्यप्रतिसिद्धानि भैषज्यानाम्[५]। आथर्वणीराङ्गिरसीर्दैवीर्मनुष्यजा उत। ओषधयः प्रजायन्ते यदा त्वं प्राण जिन्वसि[६]। यज्ञं ब्रूमो यज्ञमानमृचः सामानि भेषजा। यजूंषि होत्रा ब्रूमस्ते नो मुञ्चत्वंहसः[७] स्वादुष्किलायं मधुमां उतायं तीव्रः किलायं रसवों उतायम् उतो न्वस्य पपिवासमिन्द्रं न कश्चन सहत आहवेषु। इत्यादयः मन्त्राः वैदिककाले भिषजः औषधीनां च गुरुत्वं प्रतिपादयन्ति।

क्षित्यापतेजमरुद्व्योम्नां समाहारः शरीरम्। यावद् एते निर्मलाः उपयोगिनः स्थास्यन्ति, तावत् शरीरं सुस्थं निरोगं च स्थास्यतीति सत्यम्। **ओमानमापो मानुषीरमृक्तं धात तोकाय तनयाय शं योः। यूयं हि ष्ठा भिषजो मातृतमा विश्वस्य स्थातुर्जगतो जगम्यात्**[८] इति जलं कथं मातृवत् पोषयतीति वर्णितम्। **अपामीवामप स्त्रिधमपसेधत दुर्मतिम्। आदित्यासो युयोतना नो अंहसः**[९] इति आदित्यः मनुष्यं रोगात् शत्रोः दुर्मतेः पापाच्च रक्षतीति स्पष्टम्।

आयन्तामिमं देवास्त्रायन्तां[१०] मरुतां गणाः। त्रायन्तां विश्वायूतानि यथायमरणा असत् इति शुद्धवायोः गुरुत्वं प्रतिपादितम्। 'अश्मा भवत् ते तनूः' इति मन्त्रेण परिवेशः सम्यग् भवति चेत शरीरं वज्रवद् दृढं भवतीति वर्णितम्। यतो हि उपह्वरे गिरीणां संगथे च नदीनाम्। धिया विप्रो अजायत[११] इति पर्वते नदीनां सङ्गमे च पवित्रस्थाने जनः विद्वान् भवति। न मृत्यवेऽवतस्थे कदाचन[१२], मा पुरा जरसो मृथाः[१३] इति मृत्योः दूरे तिष्ठति

१. ऋक्. २.३३.२
२. ऋक्. २.३३.४
३. वा.सं.
४. तै.सं.
५. कौ.गृ. ३२.२६
६. अथर्व. ११.४.१६
७. अथर्व. ११.६.१४
८. ऋक्. ६.४७.१
९. ऋक्. ६.५०.७
१०. ऋग् ८.१८.१०
११. अथर्व. ४.१३
१२. ऋग् ८.६.२८
१३. अथर्व. ५.३०.१७

जनः। यतो हि नायमात्मा बलहीनेन लभ्यः[१]। गौ दुग्धं प्रदाय मातृवत् पालयति। अतः माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः[२] इति गोः प्रशंसा क्रियते।

वैदिककाले विभिन्नचिकित्सापद्धतीनां प्रचलनमासीत्। परितृन्धि पणीना मारया हृदया कवे। अथेमस्मभ्यं रन्धय[३] इति हृदयस्य विदारणमस्त्रमाध्यमेन वर्णितम्। अयं मे हस्तो भगवानयं मे भगवत्तरः[४] इति स्पर्शोपचारस्य वर्णनमस्ति।

ईशावास्यमिदं सर्वं[५] इति जगति यद् किमपि तिष्ठति भगवतरेव चिन्तयित्वा त्यागभावेन कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः[६] इति शतवर्षं यावद् जीवितुं चेष्टा करणीया। अत एव 'पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं प्र ब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्' इति वर्णितमस्ति।

आयुर्वेदे वर्णितानामोषधीनां प्रतिकूलप्रभावः नास्ति। भारतीया विद्वत्परम्परा विषयवस्तुनः आलोचनमालोडनं सत्यस्यानुसन्धानं करोति। अतः बहिःसाक्ष्यानुसारं कालः स्वीक्रियते। कालनिर्धारणे कालक्षेपः न क्रियते स्म। अधुना पाश्चात्यानां प्रभावेण मुख्यकार्यं कालनिर्धारणं सम्भूतम्। सर्वदा सर्वतः सन्देहकरणेन विश्वासः संस्कृतौ व्यपगतः। पुरा सर्वं परीक्षितं जीवने च व्यवहृतमिति मतिः भविष्यति चेद् विदेशे संस्कृतं पठित्वा गवेषकाः नूतनतथ्यानां यथा उद्घाटनं कुर्वन्ति, ततोऽधिकं भारतीयाः समर्था भविष्यन्तीति मङ्गलयानस्य निर्माणं प्रतिपादयति। अस्माकं शास्त्रे यद् वर्णितं तत् पठित्वा वैदेशिकाः विश्वसन्तः अहर्निशं सत्यान्वेषणे व्यापृताः कथं न वयमिति गभीरालोचनस्यावश्यकताऽस्ति।

*

---

१. मुण्डको. ३.२.४
२. ऋग् ६.५३.५६
३. अथर्व. ४.१३.६
४. ईशो. १
५. ईशो. २
६. यजुः ३६.२४

# निरुक्ते पदचतुष्टयम्

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।**
**एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता।।**

वेदः न केवलं भारतवर्षस्य, अपितु समग्रमानवजातेः प्राचीनतमो ग्रन्थः। स शब्दब्रह्मनाम्ना ख्यातः। प्राचीनतमः ऋग्वेदः कालक्रमेण शैलीदृष्ट्या ऋग्यजुःसाम इति 'वेदत्रयी' नाम्ना प्रसिद्धोऽभूत्। पुनश्च विषयदृष्ट्या वेदचतुष्टयः ऋग्यजुःसामाथर्वाख्यः इति ज्ञायते। एतादृशस्य वैदिकवाङ्मयस्य साक्षाद् अनुशीलनं सकृत्साध्यं न भवति। पुनश्च निरुक्ते उक्तमस्ति—

**स्थाणुरयं भारहारः कीलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा।। इति।**
(नि. १.६)

वेदानुरक्ताः वेदपाठिनः संहितापाठ-पदपाठ-क्रमपाठादिभिः अष्टौ विकृतिभिः चाद्यावधिपर्यन्तं वेदस्य संरक्षणं कुर्वन्ति। अन्यस्य अन्येषां शास्त्राणां क्षेत्रे यथा प्रक्षिप्तानां समावेशः भवति, मूलस्य परिवर्तनं परिवर्द्धनं च भवति क्रियते वा, तथैव अत्रापि स्यात्। आधुनिकाः अध्येतारः अर्थग्रहणपूर्वकमध्ययने व्यापृताः भवन्ति, ये खलु गवेषकाः ते तुलनात्मकाध्ययने वैज्ञानिकोपयोगिताविषये वर्तमानयुगे वेदानुशीलनस्य आवश्यकताविषये च गवेषणरताः सन्ति। वेदोऽखिलं ज्ञानमूलम्। अखिलज्ञानानां सारभूतं वेदे निहितमस्ति। अतः कलापक्षतः विज्ञानपक्षतः वा वेदानुशीलनं सम्भवति, परन्तु यदा साहित्ये सत्यस्य अनुशीलनं क्रियते, तदानीं तस्य विश्वसनीयता वर्द्धते।

'योऽनूचानो स नो महान्' 'ब्राह्मणेन निष्कारणो षडङ्गो वेदोऽध्येयः ज्ञेयश्च' इति उक्तिभिः अङ्गैः साकं वेदाध्ययनं कर्तव्यमिति स्पष्टम्। अन्यथा 'बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यतीति' वचनात् वेदः दुर्बोध्यः स्यात्। पाणिनीयशिक्षानुसारं तानि अङ्गानि भवन्ति—

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**

**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**

यथा अङ्गानि कीदृशं शरीरमिति सूचयन्ति, तथैव शिक्षा-कल्प-ज्योतिष-निरुक्त-छन्द-व्याकरणानि वेदपुरुषस्य अङ्गभूतानि तदर्थं स्पष्टं कुर्वन्ति। '**मन्त्रहीनः स्वरतो वर्णतो वा, मिथ्याप्रयुक्तः न तमर्थमाह। स वाग्वज्रः यजमानं हिनस्ति, यथेन्द्रशत्रुः स्वरतोऽपराधात्**'।। इति वचनं स्वरस्य वर्णस्य वा उच्चारणस्य गुरुत्वं सूचयति। शिक्षा इति वेदानां मन्त्राणां स्वरसम्बन्धिज्ञानं शिक्षयति। घ्राणेन्द्रियं विना उच्चारणं स्पष्टं न भवति। अतः शिक्षाग्रन्थः वेदपुरुषस्य घ्राणत्वेन स्वीकृतः। मन्त्राणां प्रयोगः यज्ञेषु भवति। यज्ञानां विधानं कल्पशास्त्रे नाम श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्र-शुल्वसूत्रग्रन्थेषु वर्णितमस्ति। यज्ञानुष्ठानार्थं हस्तयोः आवश्यकताऽस्ति। अतः कल्पः हस्तौ इति वर्णितः।

यज्ञानां कालनिर्धारणं नभसि ज्योतिषामयनं नाम गतिं दृष्ट्वा क्रियते। अतः ज्योतिषशास्त्रं चक्षुरूपेण गृहीतमस्ति। 'अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्।' 'एकैकस्य पदस्य सम्भाविता अवयवार्था यत्र निःशेषेण उच्यन्ते तदपि निरुक्तमिति सायणवचनाद् यस्मिन् शास्त्रे न केवलं समग्रस्य पदस्य, अपि तु तस्य अवयवार्थस्यापि विश्लेषणं क्रियते, तत् शास्त्रं निरुक्तमुच्यते। श्रवणेन अर्थज्ञानं भवति। पुनश्च सम्यक् अवबोधनेन नाधिकं श्रोतव्यमवशिष्यते। अतः निरुक्तं वेदपुरुषस्य श्रोत्रमुच्यते, पुनश्च अर्थनित्यः परीक्षेत, न संस्कारमाद्रियेत इति प्रतिज्ञानुसारमदृश्यमानक्रियापदयुक्तपदस्यापि निरुक्तमर्थदृष्ट्या विश्लेषणं करोति, यत्र व्याकरणमव्युत्पन्नपदमिति कृत्वा त्यजति। एतदर्थं व्याकरणेऽर्थवदधातुरप्रत्ययः प्रातिपदिकमिति सूत्रमस्ति। मन्त्राणां गतिमानयति छन्दः। छन्दो विहाय मन्त्रः न तिष्ठति। वेदस्य अपरं नाम भवति छन्दस्, यतो हि वेदः मन्त्राणां समूहो भवति। गतिकारकत्वेन छन्दः पादौ तु वेदस्य। मुखमिति प्रमुखं व्याकरणं स्मृतम्। यथा मुखदर्शनेन व्यक्तिविशेषस्य परिचयो भवति, स्मरणार्थं मुखं कारणभूतं भवति, तथैव सर्वशास्त्राणां शब्दज्ञानार्थं व्याकरणस्य आवश्यकता भवति। व्याकरणं शब्दस्य व्युत्पत्तिं निर्माणशैलीं च प्रतिपादयति। अत एव व्याकरणस्य अपरं नाम शब्दानुशासनम्—

**चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।**
**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश।।**

(ऋ. ४.५८.३)

इत्यस्य ऋग्वेदस्य मन्त्रस्य बहुधा व्याख्या भवति। शब्दशास्त्रानुसारं चत्वारि शृङ्गा इति चत्वारि पदजातानि। **नामाख्याते चोपसर्गनिपात-**निरुक्तम्। तत्र **सत्त्वप्रधानानि नामानि**। लिङ्गसंख्ययोरत्र सद्भाव इति सत्त्वम्। तद् येषु प्रधानं, गुणभूता च क्रिया, नामानि एव तानि। अद इति सत्त्वानामुपदेशः। किमदः इति प्रश्नकरणेन गौरश्वः पुरुषो हस्तीति उत्तरमागच्छति यत् सत्त्वान् प्राणिनः वा सूचयति।

भावप्रधानमाख्यातं भवति। क्रिया यत्र प्रधाना भवति, तद् आख्यातम्। किं भवतीति प्रश्नकरणेन उत्तरभूतं भवति आख्यातम्। यथा-आस्ते, शेते, व्रजति, तिष्ठतीति। अत्र पूर्वापरीभूतं भावमाख्यातेन आचष्टे। व्रजतीति उपक्रम प्रभृति अपवर्गपर्यन्तं सूचयति। मूर्तं रूपान्तरं प्राप्तं सत्त्वभूतं भावं सत्त्वनामभिः आचष्टे। तत्र लिङ्गसंख्ययोः प्रभावः भवति। उक्तं च 'कृदभिहितो भावो द्रव्यवत् प्रकाशते। यथा—व्रज्या, पक्तिः इत्यादि। परन्तु यत्र वाक्ये एते उभे नामाख्याते भवतः, आख्यातं प्रधानं, गुणभूतं गौणं च नाम। यतो हि **सर्वाणि नामानि आख्यातजानि** इति यास्कः।

अनित्यवादिनः औदुम्बरायणादयः शब्दमनित्यत्वेन उपदिशन्ति इन्द्रिय-नित्यं वचनम्। इन्द्र आत्मा। स येन ईयते लिङ्ग्यते अनुमीयते तदिन्द्रियम्। तस्मिन् इन्द्रिये यावत् तिष्ठति, तावत् नित्यं वचनं भवति यावदेव वक्तुः वागिन्द्रिये वचनं भवति, तावदेव तदस्तीति वक्तुं शक्यते, ततः परं नष्टं याति। तर्हि नष्टस्य शब्दस्य नामाख्याते चोपसर्गनिपाताश्च इति चतुर्धा विभाजनं कथं स्यात्। पुनश्च अयुगपद् उत्पन्नानां शब्दानामितरेतरोपदेशः किं पदं कं प्रति प्रधानमप्रधानं वा इति विनष्टाविनष्टयोर्मध्ये प्रधानाप्रधानभावः असङ्गतो भवति। तथैव शास्त्रकृतः शब्दस्य शब्दान्तरेण योगः। तद् यथा उपसर्गस्य धातुना धातोः प्रत्ययेन, प्रत्ययस्य लोपागमवर्णविकारैः योगः न सम्भवति शब्दनित्यत्वाद् अयं योगः विनष्टाविनष्टयोर्मध्ये नोपपद्यते।

शब्दनित्यत्ववादिनः मतमेतत् निराकुर्वन्ति। नित्यत्वात् पदचतुष्टया-दिविभाजनं प्रधानाप्रधानभावविचारः शब्दानां योगश्च सर्वमुपपद्यते।

जायते, अस्ति, विपरिणमते, वर्द्धते, अपक्षीयते, विनश्यतीति पूर्वापरीभूतस्य भावस्य षड् विकाराः सन्तीति वार्ष्यायणिः। तत्र जायते इति पूर्वभावस्य आदिम् आचष्टे, अपरभावम् 'अस्तीति' न आचष्टे न प्रतिषेधति। अस्तीति उत्पन्नस्य सत्त्वस्य अवधारणम्। विपरिणमति इति तत्त्वाद् अप्रच्यवमानस्य अपरिवर्तितस्य वस्तुनः विकारं ब्रवीति। वर्द्धते इति स्वाङ्गाभ्युदयं सांयौगिकानां वार्थानामभ्युच्चयं सूचयति यथा—वर्द्धते विजयेनेति वा वर्द्धते शरीरेणेति वा। अपक्षीयते इति वर्द्धते इत्यस्य प्रतिलोमं सूचयति। तद् यथा स्वाङ्गैः सांयौगिकैर्वा द्रव्यैरपक्षीयते। विनश्यतीति अपरभावस्य आदिम् आचष्टे। एतेषां भावविकाराणां मध्ये सूक्ष्मातिसूक्ष्मः भेदः अस्ति। एकेन अपरस्य बोधः स्यादिति विचारः आगच्छति। परन्तु यथा न आचष्टे न प्रतिषेधतीति सीमा निर्धारिताऽस्ति, तस्मात् षड् विभाजनं समीचीनं प्रतिभाति। एतानतिरिच्य अन्ये ये भावविकाराः लभ्यन्ते, ते एतेषामेव विकाराः भवन्ति। यथा-अस्ति शब्दवाच्योऽस्ति, विद्यते, भवतीत्येवमादि।

पदस्य तृतीयं विभाजनं भवति उपसर्गः। 'न निर्बद्धा उपसर्गा अर्थान्निराहुरिति शाकटायनः। नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति। अर्थात् प्र, परादि उपसर्गाणां स्वकीयार्थः नास्ति नामाख्याताभ्यां संयुक्ताः सन्तः तयोः विशेषार्थान् प्रकाशयन्ति द्योतयन्ति। विशेषार्थप्रकाशनमेव तेषां स्वकीयार्थान् सूचयति। अतः नामाख्यातवियोगे तेषामर्थाभिधानशक्ति-र्नास्तीति कथनं न समीचीनम्, यतो हि उपसर्गाः उच्चावचाः पदार्थाः भवन्तीति गार्ग्यः। विभिन्नार्थेषु प्रयुक्ताः उपसर्गाः नामाख्यातयोः अर्थविकरणं नाम परिवर्तितं परिवर्द्धितं च अर्थं प्रकाशयन्ति। यथा–परीति सर्वतो भावम्। परिधावतीति सर्वतो धावतीत्यर्थः। अधीत्युपरि भावमैश्वर्यं वा। अधितिष्ठति लोकम्। अधिपतिरिति अध्यक्ष इत्यर्थः।

पदस्य चतुर्थं विभाजनं भवति निपातः। **उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्तीति निपाताः। अप्युपमार्थेऽपि कर्मोपसंग्रहार्थेऽपि पदपूरणाः।** अर्थात् निपातानां प्रयोगः उपमार्थे कर्मोपसंग्रहर्थे नाम अर्थोपसंग्रहार्थे पदपूरणार्थे वा भवति। तेषामेते चत्वारः इव, न, चित्, नु उपमार्थे भवन्ति। यथा–अग्निरिव। न इत्यस्य भाषायां निषेधार्थे प्रयोगः भवति। परन्तु छन्दसि उभयार्थे। यथा नेन्द्रं देवममंसत इत्यत्र निषेधार्थे। दुर्मदासो न सुरायामित्यत्र उपमार्थे प्रयुक्तः। चिदित्येषोऽनेककर्मा। आचार्यश्चिदिदं ब्रूयाद् इति

पूजायाम्। दधिचित् इति उपमार्थे। कुल्माषाँश्चिदाह इत्यवकुत्सिते (निन्दायाम्)। नु इत्येषोऽनेककर्मा। इदं नु करिष्यतीति हेत्वपदेशे। कथं नु करिष्यतीति अनुपृष्टे अनुप्रश्ने। वृक्षस्य नु ते पुरुहूत वया:—इत्यत्र उपमार्थे।

निपाता: कर्मोपसंग्रहार्थे अर्थोपसंग्रहार्थे वा प्रयुज्यन्ते। अथ यस्यागमादर्थपृथक्त्वमह विज्ञायते न त्वौद्देशिकमिव विग्रहे पृथक्त्वात् स कर्मोपसंग्रह: अर्थाद् यस्य अश्रूयमाणनिपातस्य अध्याहाराद् आगमाद् अर्थपृथक्त्वं विज्ञायते, परन्तु स: औद्देशिकमिव न भवति नाम उद्दिष्टवस्तु इव स्वतन्त्र: न भवति विग्रहेण पृथक्त्वात्, स कर्मोपसंग्रह:। यथा–देवदत्त: यज्ञदत्तौ पचेते इत्यत्र देवदत्तश्च यज्ञदत्तश्च पचेते इति विग्रहवाक्यम्। अत्र प्रयुक्त: च निपात: अश्रूयमाण:। अत: अध्याह्रियते। स च निपात: देवदत्तयज्ञदत्तयो: पृथक्त्वं सूचयति। पुनश्च 'पचेते' इति क्रियायाम् उपसंग्रहं मेलनं च कारयति। स अध्याह्रियमाणोऽपि औद्देशिक: उद्दिष्टवस्तु स्वतन्त्रवस्तु वा न भवति, अत: अत्र च निपात: कर्मोपसंग्रहार्थे प्रयुक्त:।

निपातस्य तृतीयप्रयोग: पदपूरणार्थं भवति। यथा इदमु तदु। अत्र इदं = इदमु तद् = तदु समानार्थका: शब्दा उकार: पदपूरणार्थं प्रयुक्तो भवति। एवं खलु तद् बभूव इति खलु पदपूरणार्थको भवति। एवम् अन्य केचन निपाता: पदपूरणार्थका: भवन्ति।

एवं वेदोपकारकस्य अङ्गभूतस्य यास्कप्रणितस्य निरुक्तस्य अनुशीलनं कुर्मश्चेत् चतुर्विधानां शब्दानां प्रवृत्तिविषये ज्ञानं भवति। वैदिकी लौकिकी चेति संस्कृतभाषा द्विधा विभज्यते। कुत्रचिद् वैदिकभाषायां कुत्रचिद् वा लौकिकभाषायां शब्दानां भिन्नार्थे विभिन्नार्थे वा प्रयोग: दृश्यते। मानवजातिं प्रति भगवत: प्रसादरूपा भवति वाक् शक्ति:। सत्यमेव उक्तं काव्यादर्शकारेण दण्डिना—

**इदमन्धं तम: कृत्स्नं जायेत भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।** (१.४)

**सहायकग्रन्थसूची**


१. ऋग्वेद:
२. उपनिषद:
३. निरुक्तम्
४. पाणिनीयशिक्षा
५. महाभाष्यम्
६. ऋग्वेदभाष्यभूमिका
७. काव्यादर्श:


*

# धर्मशास्त्रस्योपाङ्गत्वविचारः

वैदिकवाङ्मये के के ग्रन्थाः कानि च शास्त्राणि समाद्रियन्त इति जिज्ञासायां तत् संहितासाहित्यादारभ्य सूत्रसाहित्यं यावद् गणयितुं शक्यते। एतेषु सन्ति षड् वेदाङ्गानि।[१] एतानि वेदपुरुषस्य प्रमुखान्यङ्गानि भवन्ति। पाणिनीयशिक्षायां स्पष्टं समुदिश्यते—

**छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।**
**शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।**
**तस्मात् साङ्गमधीत्येव ब्रह्मलोके महीयते।**[२]

उपाङ्गत्वेन धर्मसूत्राणां धर्मशास्त्राणां वा ग्रहणं चरणव्यूहस्य चतुर्थखण्डे सूच्यते—प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायस्तर्क इत्युपाङ्गानि। एतेषां सर्वेषां सामान्यार्थो भवति भावस्य स्पष्टीकरणं नियमीकरणं वा। वेदोऽखिलं धर्ममूलम्। विद् धातोः गणभेदेन विभिन्नार्थे वेदशब्दस्य व्युत्पत्तिः भवति। अस्य सामूहिकार्थो भवति वेदं पठित्वा संसारबन्धनविषये ज्ञानं प्राप्य ततः मुक्तः सन् निःश्रेयसः प्राप्तिः।[३] एवंविधः वेदः ऋग्यजुस्सामाथर्वाख्यः चतुर्धा विभक्तः विषयदृष्ट्या। तत्र स्तुतिमूलकः ऋग्वेदः, यज्ञपरकः यजुर्वेदः, गानयुक्तः सामवेदः, ज्ञानप्रमुखः अथर्ववेदः ब्रह्मवेदत्वेन परिचितः। भाषा परिवर्त्तनशीला। वैदिकी लौकिकीति संस्कृतभाषा द्विधा विभक्ता। मन्त्राणां समूहः वेदः।[४] छन्दः विना मन्त्राणामुच्चारणं भवतुं नार्हति। अतः छन्दः वेदस्य पादत्वेन परिगणितः। उच्चारणं शिक्षयति शिक्षा। उच्चारणे त्रुटिः भवति चेद् यजमानस्य महती क्षतिः भवति।[५] शिक्षा वेदस्य घ्राणस्वरूपः भवति, यतो हि घ्राणं विना

---

१. अंग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि। (१-ii-मुण्डको-१.१५)

२. पाणिनीयशिक्षा

३. विद् ज्ञाने, विद्लृ लाभे, विद् सत्तायां, विद् विदारणे

४. मन्त्रब्राह्मणयोर्वेदनामधेयम्।

५. मन्त्रहीनः स्वरतो वर्णतो वा. (पा.शि)

अथवा वायुं विना शब्दोच्चारणं भवितुं नार्हति। नभोमण्डले ज्योतिषां नक्षत्राणां गतिमयनं दृष्ट्वा कालनिर्णयः क्रियते। तन्निर्धारितं भवति ज्योतिषशास्त्रे। अतः ज्योतिषं वेदपुरुषस्य चक्षुः भवति। निरुक्तं (निर्-वच्-क्त) शब्दार्थं धातुदृष्ट्या व्याख्याति। न हि निरर्थकाः शब्दाः इति मत्वा सर्वेषां शब्दानामर्थः करणीयः येन ते बोधगम्याः स्युः इति यास्काचार्यस्य मतम्। व्याकरणज्ञानं विना शाब्दबोधः न जायते। व्याकरणं शब्दशास्त्रस्य मुख्यमङ्गं भवति, येन मुखत्वेन परिगणितम्।.....'हस्तौ कल्पोऽथ पठ्यते' कल्पशास्त्रं वेदपुरुषस्य हस्तौ कल्प्यते समर्थ्यते यागप्रयोगोऽत्र। कल्पो वेदविहितानां कर्माणामानुपूर्वेण कल्पना शास्त्रम्।[१] कल्पे श्रौत-गृह्य-धर्म-शूल्वसूत्रमाध्यमेन अनुष्ठानानां कर्माणां चर्चा प्रचलति। यत्र ब्राह्मणग्रन्थे वर्णितानमग्नौ सम्पाद्यमानानां दर्श-पूर्णमासादियज्ञयागादीनामनुष्ठानानां वर्णनमस्ति, तत् श्रौतसूत्रम्। यत्र गृहाग्नौ अनुष्ठीयमानानां यागानां उपनयन-विवाह-श्राद्धादीनां संस्काराणां वर्णनमस्ति, तत् गृह्यसूत्रम्। यत्र चतुर्वर्णानामाश्रमाणां कर्तव्याकर्तव्यविषये अधिकतया राज्ञः कर्तव्यविषये प्रतिपादनं भवति, तत् धर्मसूत्रम्। यत्र यज्ञमण्डपस्य निर्माणविधिः विशेषेण प्रतिपादितो भवति, यत् खलु आर्याणां ज्यामितिज्ञानं गणनाविधिं च सूचयति, तत् शुल्वसूत्रम्।[२] धर्मशास्त्रं धर्मसूत्रस्य विकसितरूपं भवति।[३]

धृ-धातोः धर्मशब्दः उत्पद्यते। धारणात् धर्म इत्याहुर्धर्मो धारयते प्रजाः।[४] धर्मस्य अर्थो भवति प्रथमतः कर्तव्यम्। अतः धर्मशास्त्रे कर्तव्याकर्तव्यविषये चर्चा भवति। धर्मशास्त्रे नियमाः उल्लिखिताः। नियमानुसारं कार्यं कृत्वा मानवः स्वस्य राष्ट्रस्य मानवसमाजस्य च कल्याणं कर्त्तुं प्रभवति। अस्य तृतीयोऽर्थो भवति कर्मकाण्डं पूजाप्रभृतयः। जीवेम शरदः शतमिति जनः शतायुः सन् '**कुर्वन् एव हि कर्माणि जिजीविषेत् शतं समाः** इति चिन्तयति।[५] अतः मनुष्यस्य जीवनकालं शतवर्षं यावद्

---

१. विष्णुमित्रः। २. वेदाङ्कः, कल्याणपत्रिका।

३. श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः, मनु. २.१०

४. मनुस्मृतिः।

५. ईशोपनिषद्।

मत्वा चतुर्षु आश्रमेषु विभाजितवन्तः क्रान्तद्रष्टारः ऋषयः। तत्र पञ्चविंशतिवर्षं यावद् ब्रह्मचर्याश्रमः। ब्रह्म नाम वेदः। वेदस्य आचरणम् आ समन्तात् श्रमः आश्रमः। ब्रह्मचर्याश्रमे वटुः गुरुकुले निवसन् वेदाध्ययनं करोति स्म। ततः परं गार्ह्यस्थाश्रमस्य प्रारम्भो भवति। अस्मिन् आश्रमे तिष्ठन् जनः श्रौतसूत्रे गृह्यसूत्रे च वर्णितानुष्ठानानि करोति। वानप्रस्थाश्रमे जनः संसारं त्यक्त्वा वनं प्रति प्रस्थानं करोति। आश्रमे गुरूपदेशेन परिमार्जितः भूत्वा अन्ते संन्यासं आचरति। अतः धर्मशास्त्रस्य धर्मसूत्रस्य वा ज्ञानमावश्यकम्।

धर्मशास्त्रे प्रमुखरूपेण षड् विषयाः आलोच्यन्ते-वर्णधर्मः, आश्रमधर्मः, वर्णाश्रमधर्मः, गुणधर्मः, निमित्तधर्मः, साधारणधर्मश्च।

**१. वर्णधर्मः**

कर्मानुसारं मनुष्याः चतुर्षु वर्णेषु विभक्ताः आसन्[१], यस्य उल्लेखः प्रथमवारं ऋग्वेदे पुरुषसूक्ते अभवत्।[२] परवर्तिकाले मनुनास्य विस्तारो मनुस्मृतौ कृतः। यथा—

ब्राह्मणस्य—

**अध्यापनमध्ययनं यजनं याजनं तथा।**
**दानं प्रतिग्रहञ्चैव ब्राह्मणानामकल्पयत्।।**

क्षत्रियस्य—

**प्रजानां रक्षणं दानमिज्यामध्ययनमेव च।**
**विषयेष्वप्रसक्तिश्च क्षत्रियाणां समासतः।।**

वैश्यस्य—

**पशूनां रक्षणं दानमिज्यामध्ययनमेव च।**
**वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च।।**

---

१. चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः, गीता ४.१३
२. ब्राह्मणोऽस्य मुखमासीत्

शूद्रस्य—

**एकमेव तु शूद्रस्य प्रभुकर्मसम्पादनम्।**
**एतेषामेव वर्णानां शुश्रुषामनसूयया।।**[1]

समग्राणां धर्मशास्त्राणामस्मिन् विषये सारः प्रस्थानग्रन्थे श्रीमद्भगवद्गीतायां दत्तोऽस्ति। तद् यथा—

ब्रह्मधर्मः—

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च।**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम्।।**

(गीता १८.४२)

क्षात्रधर्मः—

**शौर्यं तेजो धृतिः दाक्ष्यं युद्धे चाप्यपलायनम्।**
**दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम्।।** (गीता १८.४३)

वैश्यधर्मः—

**कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम्।**

(गीता १८.४४)

शूद्रधर्मः—

**परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।** (गीता १८.४४)

ब्राह्मणशूद्रयोः प्रसङ्गः ब्राह्मणे एवं वर्त्तते—

तैत्तिरीये—

**ब्राह्मणश्च शूद्रश्च चर्मकर्तौ न्यायच्छेते।**
**दैव्यो वै वर्णो ब्राह्मणः, असुर्यो शूद्रः।।**

(तै.ब्रा. १.२.६ पुरुषसूक्तम्, ऋग् १०.९०)

**२. आश्रमधर्मः**

'शतायुर्वै पुरुषः' 'जीवेम शरदः शतम्' इति वैदिकवचनाधारेण मानवानामायुः शतवर्षं यावत्कल्पितम्। चतुर्षु आश्रमेषु यद्ययं विभज्यते तर्हि

---

१. मनुस्मृतिः १.८८-९१

प्रत्याश्रमं पञ्चविंशतिवर्षाणि भवन्ति। एते आश्रमा; क्रमेण ब्रह्मचर्य-गार्हस्थ्य-वानप्रस्थ-संन्यासश्च। एतेषु चतुर्षु ग्राहस्थ्यं श्रेष्ठतमं राजते। यतो हि तमाश्रित्य अन्ये वर्द्धन्ते। उक्तं च मनुना—

**यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।**
**तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।।** (मनु ३.२२)

ब्रह्मचर्याश्रमे प्रमुखमुपनयनम्। उपनयनं प्रतिवर्णं कदा भवति तस्य वर्णनं धर्मशास्त्रग्रन्थेषु सुविशदं लभ्यते। वेदे तु संस्काराणां बीजं निर्देशितमस्ति। यथा—

१. स इदं देवेभ्यो हविः संस्कुरु साधु संस्कृतं संस्कृर्वित्येवैतदाहुः– शतपथब्राह्मणम् १.१.४.२०, ३.२.१.२२

२. तस्मादु स्त्री पुंमासं संस्कृते तिष्ठन्तमभ्येति–छान्दोग्योपनिषद् १.१६.१-२

३. तस्मादेव एवं यज्ञस्य मनश्च वाक् च वर्तिनी न्यतरां मनसा संस्करोति ब्रह्मा वाचा होता इति दृश्यते। जैमिनिसूत्रे ६.१.३५

४. संस्कारो नाम स भवति यस्मिन् जाते पदार्थो भवति योग्यः कस्यचिदर्थस्य। जैमिनिसूत्रम् १.३

### ३. वर्णाश्रमधर्मः

वर्णाश्रमधर्मे प्रतिवर्णं धर्मो भिद्यते। दिङ्मात्रमेकमुद्राह्रियते। उपनयनकाले प्रतिवर्णं ब्रह्मचारिणां दण्डधारणे काष्ठं पृथगस्ति। उक्तं च मनुना—

**ब्राह्मणो वैल्वपलाशौ क्षत्रियो वाटखादिरौ।**
**पैलवौदुम्बरौ वैश्यो दण्डानर्हन्ति कर्मतः।।** (मनु २.४५)

### ४. गुणधर्मः

अभिषिक्तस्य गुणवतः राज्ञः प्रजापालनोपायस्तन्नियमाश्च गुणधर्मपदेन व्यपदिश्यते। गुणपदेन राजा गृह्यते। मनुः राज्ञः षड् गुणानधिकृत्य वदति—

**सन्धिश्च विग्रहश्चैव यानमासनमेव च।**
**द्वैधीभावं संशयं च षड् गुणान् चिन्तयेत् सदा।।**
(मनु ७.१६०)

अहोरात्रावष्टावपि प्रहरेषु प्रतिप्रहरं राज्ञा किं करणीयं तद् विचारो भिन्नभिन्नस्मृतिग्रन्थेषु विस्तरेण प्रपञ्चितमस्ति।

**५. निमित्तधर्मः**

धर्मशास्त्रे पापानां विचारः कृतो वर्त्तते। एतानि पापानि महापातक-अतिपातक-उपपातक-जातिभ्रंशकरसंकरीकरणादिषु विभज्यते। धर्मशास्त्रे प्रति पापं प्रायश्चित्तप्रकारो विहितो विद्यते। प्रायश्चित्तस्य परिभाषां व्याकुर्वन् गौतमो लिखति 'विहिताकरणे प्रतिसिद्धसेवने निमित्तं प्रायश्चित्तम्'।[1] मनुः प्रायश्चित्तं तपो मनुते—

**प्रायो नाम तपः प्रोक्तं चित्तं निश्चय उच्यते।**
**तपो निश्चयसंयुक्तं प्रायश्चित्तमिति स्मृतम्।।**

अर्थात् जपतपःहोमस्नानतीर्थयात्रादानानशनद्वारा पापानि क्षीयन्ते।

**६. साधारणधर्मः**

ब्राह्मणक्षत्रियवैश्यशूद्रसर्वजातीनां सामान्यो धर्मः साधारणधर्मः। गौतमो ब्रूते–मा हिंस्यात् सर्वभूतानि इति। आचाण्डलब्राह्मणं साधारणधर्मः। मनुना एतादृशदशधर्माः सर्वजातीनां साधारणधर्मत्वेन परिगणिताः।

**धृतिः क्षमादमोऽस्तेयं शौचमिन्द्रियनिग्रहः।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।**[2]

एतैव धर्माः ग्रन्थभेदेन सामान्यरूपेण भिद्यन्ते। रामायण-महाभारतपुराणेषूदाहरणमाध्यमेन कथाप्रसङ्गेन धर्मतत्त्वानां व्यापकं वर्णनं लभ्यते।

एतदतिरिक्ताः बहवः समसामयिकविषया धर्मशास्त्रे वर्णिताः सन्ति येषामिदानीमपि प्रासङ्गिकता दृश्यते। कतिपया एतादृशसन्दर्भाः संगृह्यन्ते।

**दासप्रथा**

सेवाकार्ये नियुक्तः जनो दासो भृत्यो वा उच्यते। अद्यापि दासप्रथा कुत्रचित् प्रचलति। समाजस्य वर्तमानस्थितेः कारणत्वेन गृहीतेषु विषयेषु एषा

---

१. गौतमधर्मसूत्रम् २. मनु. ६.९२

अन्यतमा। अस्या: क्रूरस्वरूपं यस्य कस्यापि सहृदयस्य चित्तमान्दोलयति। मेघास्थनीज्महाशयः अस्मिन् विषये किमपि न लिखति, येन वैदिककाले का स्थितिरासीदिति कूतुहलं जायते। ऋग्वेदे दासशब्दस्य प्रयोगः आर्यैः पराजितानां कृते अभवत्। ये गृहीताः सन्तः सेवाकार्ये नियुक्ताः अभवन्[१] 'उदकुम्भानधिनिधाय दास्यो मार्जालीयं परिनृत्यन्ति'[२] इति तैतिरियसंहितायां 'सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्याय'[३] इति बृहदारण्यकोपनिषदि वर्णनमस्ति।

आपस्तम्भधर्मसूत्रे उल्लेखोऽस्ति यत् यदि अतिथेः आवश्यकता अस्ति परिवारजनाः स्वखाद्यांशं दास्यन्ति, न तु दासस्य भागं दद्यात्।[४]

मनुः सप्तविधदासानां वर्णनं करोति, युद्धबन्दी, भोजनार्थं नियुक्तः, दासीपुत्रः, क्रीतः, मात्रा पित्रा वा दत्तः, वंशानुसारं संपदरूपेण प्राप्तः, राजदण्डेन दण्डितः।[५] नारदः पञ्चदशदासानामुल्लेखं करोति गृहे पालितः, क्रीतः, दानेन वा प्राप्तः, संपदरूपेण लब्धः, अकाले रक्षितः, अन्येन प्रतिश्रुतः, ऋणग्रस्तः, युद्धबन्दी, द्यूतेन जीतः, अहं भवतामिति स्वयम् आगतः, संन्यासात् च्युतः, कतिपयदिनेभ्यः दासः, भोजनार्थं स्थितः, दास्या आहूतः (वडवाहूत), स्वयं विक्रीतः।[६]

नारदयाज्ञवल्क्यानुसारं यदि दासः स्वामिनं मृत्योः मुखाद् रक्षति, तर्हि मुक्तः भवति, पुत्रवत् संपत्तेः अधिकारी च भवति। निम्नजातीयजनः उच्चवर्णस्य दासो भवितुमर्हति।[७]

व्यवहारमयूखानुसारं यदि गृहीतस्य उपनयनसंस्कारः क्रियते स पुत्रवत् भवति, अन्यथा दासो भवति।[८]

**वेश्याप्रथा**

इदानीं वेश्यावृत्तिर्यथा निन्दनीया वैदिककाले स्मृतिकालेऽपि सा तथैव निन्दनीया आसीत्। ब्राह्मणो यदि महापापमाचरेत् तर्हि स कदापि वध्यो न

---

१. ऋग्. ८.५६.३
२. त्रै.सं. ७.५.१.१
३. बृहदारण्यकोपनिषद् ३.४.४.२३
४. आ.धर्म. २.४.९.११
५. मनु. ८.४१५
६. नारद. ३९
७. नारद. ३९
८. नारद. पृ. ११४

भवति स्म। एवमेव वेश्यावृतिमाचरन्ती ब्राह्मणी हत्वापराधं कृत्वापि प्रायश्चित्तं नापेक्षते।[१] केवलं मुष्ठिपरिमितान्नदानेन प्रायश्चित्तं कल्पते। वेश्याहस्ताद् ब्राह्मणोऽन्नं न गृह्णीयादिति मनुर्वदति।[२] वेश्या सदैव दण्डनीयेति धर्मशास्त्रकाराणां मतम्।

अयं वेश्याशब्द ऋग्वेदकालादेव विभिन्नप्रसङ्गेषु दृश्यते। यथा मरुद्गणाः विद्युता सह एवं संश्लिष्टा भवन्ति यथा युवतिवेश्यया सह कामुकाः संलग्नाः।[३] नारदधर्मशास्त्रे गम्यागम्यप्रसङ्गे उच्चजातिसम्पन्नपुरुषो निम्नजातिवेश्यासु न संगच्छेदिति वदति। यथा अब्राह्मणी स्वैरिणी, वेश्या, दासी च उच्चकुलपुरुषद्वारा न सेव्या इति।[४]

यदि उपर्युक्तप्रसङ्गानामनुशीलनं क्रियते तर्हि समीक्षितुं शक्यते यद् वेदकालाद् इदानीं यावद् वेश्यावृत्तिनिन्दनीया वर्त्तते। धर्मशास्त्रकाराः पौराणिका अपि प्रसङ्गमाध्यमेन घटनाक्रमं वर्णयित्वा विधिनिषेधमाध्यमेन समाजस्योपकारं मार्गदर्शनं च कृतवन्तः।

**पञ्चमहायज्ञाः**

पञ्चमहायज्ञानां महत्त्वं वैदिककाले ब्राह्मणारण्यकग्रन्थेषु प्रभूतं दृश्यते। शतपथे प्रशस्तिरेवमस्ति पञ्चैव महायज्ञाः। तान्यैव महासत्राणि भूतयज्ञो, मनुष्ययज्ञो, पितृयज्ञो, देवयज्ञो, ब्रह्मयज्ञ इति।[५] तैतिरीयारण्यकेऽपि[६] तथैव वर्ण्यते। अग्नौ आहुतिप्रदानं देवतोद्देश्ये हविस्त्यागः देवयज्ञः। पितृपुरुषाणां कृते श्राद्धं तर्पणादिकर्म पितृयज्ञः। जीवानां कृते बलिप्रदानं पिण्डादिदानं च भूतयज्ञः। अतिथिसत्कारपूर्वकं सादरं भोजनप्रदानं मनुष्ययज्ञः। गुरुमुखाद् वेदमधीत्य प्रतिदिनं स्वाध्यायो ब्रह्मयज्ञपदेन च व्यपदिश्यते।

आश्वलायनगृह्यसूत्रे ३.३.१ अधिकं वर्णनं स्वाध्यायमधिकृत्य लभ्यते। पुराणस्य कथाः व्यापकरूपेण गाथानाराशंसीरूपेण बहुभिरध्यायैः पञ्चमहायज्ञान् वर्णयन्ति। यथा–भागवते धुन्धकारीकथामाध्यमेन गोकर्णद्वारा

---

१. गौतम. २२.२७
२. मनु. ८.२५९
३. ऋग्वेदः १.१६७.४
४. नारद. ७८.७९
५. शतपथ, ११.५.६.७
६. तैतिरीयारण्यकम् ११.१०

पितृयज्ञवर्णनम्। रामायणे श्रवणकुमारकथा, रामद्वारा दशरथाय पिण्डदानम्, जटायोः और्ध्वदैहिकं कर्म। इदानीं प्रतिदिनं पितृश्राद्धं नदीतर्पणं वा न भवति। परन्तु श्रावणमासस्यापरपक्षे तर्पणस्य विधानमिदानीमपि प्रभूतं दृश्यते।

वेदकाले मूर्तिपूजायाः प्राधान्यं नासीत्। देवतानां नामोच्चारणपूर्वकमग्नौ हविरर्प्यते स्म। एतेषु देवेषु इन्द्राग्निसोममरुतपूषावरुणप्रमुखाः आसन्। याज्ञवल्क्यस्मृत्यनुसारेण (१.१००) प्रतिदिनं तर्पणदेवपूजनात् परं पञ्चयज्ञेषु होमस्य ग्रहणं भवति स्म। मध्यकाले वैश्वदेवपूजनं देवयज्ञत्वेन स्वीकृतम्। वेदात्परं परवर्तिकाले मूर्तिपूजायाः प्रसारोऽभूत्। बृहद्देवता अग्निपुराण–विष्णुधर्मोत्तरपुराणेषु प्रतिमानिर्माणपद्धतिर्नियमाश्च वर्णिताः सन्ति। अद्वैतवादी शङ्करोऽपि पञ्चदेवोपासनायाः प्रचारं कृतवान्। स्तोत्रेष्वपि विभिन्नदेवानां पूजाप्रकारो वर्णितः। के देवाः कैरुपास्या इति वर्णनमपि लभ्यते। यथा—

**अप्सु देवा मनुष्याणां दिवि देवा मनीषिणाम्।**
**काष्ठलोष्ठेषु मूर्खाणां युक्तस्यात्मनि देवता।।** [१]
**अग्नौ क्रियावतां देवो दिवि देवो मनीषिणाम्।**
**प्रतिमा स्वल्पबुद्धीनां योगिनां हृदये हरिः।।** [२]

श्लोकद्वयस्य समीक्षायामेवं ज्ञायते तपस्विनां साधकानां च हृदये भगवान् सदैव राजते। भौतिकप्रगतये समृद्धये च जलवाय्वाकाशाग्निसम्बधिनो देवाः स्तूयन्ते। जडबुद्धयः पाषाणवृक्षादीन् देवत्वेन पूजयन्ति।

## उपसंहारः

भारतीयसंस्कृतेः सभ्यतायाश्च मूलस्रोतांसि वेदा एव। अस्माद् वैदिकदर्शनानि, रामायणं, महाभारतं, पुराणानि, तदाधारितकाव्यनाटकानि सर्वाणि वेदमूलकानि। वेदस्यापरं नाम श्रुतिः। तत्संपोषिका स्मृतिः। वेदा एव सकलशास्त्राणां प्रमाणम्। वेदात्परं स्मृतिः धर्मशास्त्रं वा द्वितीय-

---

१. शातातप. (अह्निकप्रकाशे) पृ. ३८२
२. पूजाप्रकाशः पृ. ८

प्रमाणत्वेनाङ्गीक्रियते। यत्र श्रुतिप्रमाणं नास्ति तत्र स्मृतिप्रमाणं गृह्यते। उभे प्राप्ते सति दोषो नास्ति। यदा द्वयोः प्रमाणयोर्मध्ये विरोधस्तत्र श्रुतिप्रमाणं ग्राह्यम्। उक्तं च 'श्रुतिस्मृतिविवादेषु श्रुतिरेव बलीयसी'। कालिदासोऽपि स्मृतिं श्रुतेरनुयायिनीत्वेन वर्णितवान्। 'श्रुतेरेवार्थं स्मृतिरन्वगच्छदिति'।

उपाङ्गत्वेन यद् धर्मो वर्णितस्तन्मूलमेव वेदः। परवर्तिसाहित्येषु केवलं तत्पल्लवनम्। वैदिकयज्ञ एव भगवान्। **'यज्ञो वै भगवान् विष्णुः'** इति। स एव विष्णुः पुराणेषु कृष्णरूपेण वर्णितः। प्रतीकीभूताः सर्वे वैदिकदेवा अपि कर्मकाण्डप्रभावेण प्रभाविताः सन्तः प्रतिमारूपेण पूजिताः। तेषां च महिमा महदाडम्बरेण वर्णितः। 'त्रेधा निधदे पदम्' इत्यस्य वेदवाक्यांशस्योपबृंहणं वामनपुराणस्य रूपं सञ्जातम्। 'मत्स्यं पाणौ आपेदे' इति मत्स्यावतारप्रसङ्गो द्योतितः पुराणेषु। अनुशीलनेन एवं ज्ञायते यद् वेद एव धर्मलक्षणम्। उक्तं च मनुना—

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।**
**एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्।।**

(मनु २.१२)

इदानीं केचन धर्मशास्त्रे प्रतिपादिततथ्यानां कुव्याख्यां कृत्वा लोकान् भ्रामयन्ति। यथा वेश्यावृत्तिः। इयं वृत्तिस्तदानीमासीत्। इदानीमपि वर्तते। श्रुतौ स्मृतावपि निन्दाऽस्याः कृता वर्तते, इदानीमपि ता निन्दनीयाः। दासप्रथाप्रसङ्गे उक्तमस्ति यत् केनापि कारणेन गृहे भोजनं नास्ति चेत् भृत्यः केनापि प्रकारेण भोजनीयः। एवं च स्त्रीणां पराधीनतामधोलिखितश्लोक-माध्यमेनारोपयन्ति।

**पिता रक्षति कौमारे भर्ता रक्षति यौवने।**
**रक्षन्ति स्थविरे पुत्रा न स्त्रीः स्वातन्त्र्यमर्हति।।** (मनु ९.३)

अस्य श्लोकस्य तात्पर्यार्थो भवति यत् स्त्री गृहमेव 'न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते'। 'यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः' इति। स्वरूपावस्थानुसारेण पृथक् पृथग् भवति। कदा सा माता, कदा पत्नी कदा भगिनी कदा च कान्ता भवति। अतः कौमारे कन्यारूपेण यौवने स्त्रीरूपेण, वार्द्धक्ये मातृरूपेण इत्याशयः। गृहस्थ एव यज्ञं सम्पादयिष्यति।

गाश्च पालयिष्यति गुरुकुलानां सञ्चालनार्थं धनं दास्यति। संन्यासिनां कृते आश्रमनिर्माणं करिष्यति। तदानीं प्रभूतं यज्ञो भविष्यति। यज्ञात् पर्जन्यः। पर्जन्यादन्नस्य समुत्पत्तिः। उक्तं च गीतायाम्—

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद् भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।।** (गीता ३.१४)

यज्ञसम्पादने गृहस्थानां भूमिकामनुभूय सर्वे धर्मशास्त्रकारा गार्हस्थ्यं सर्वाश्रमाणां संस्थितिरूपेण स्वीकुर्वन्ति।

**यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम्।**
**तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्।।**

(मनु ६.९०)

एभिः कारणैः पाणिनीयशिक्षायां वेदाङ्गत्वेन धर्मः कल्पान्तर्भूतो वेदपुरुषहस्तत्वेन आदृतः। उपाङ्गेषु वेदस्य सम्यक् महत्त्वं प्रतिपादितम्। अतो वेदाङ्गत्वेन उपाङ्गत्वेन च धर्मशास्त्रस्य महिमा वेदपरवर्तिसाहित्येषु वर्णितः पल्लवितश्च। चतुर्दशविद्यास्थानेषु धर्मशास्त्रस्योल्लेखस्तत् प्रतिपादियति—

**अङ्गानि वेदश्चत्वारः मीमांसोन्यायविस्तारः।**
**धर्मशास्त्रं पुराणं च विद्या ह्येताः चतुर्दश।।**



# कौटिल्यस्यार्थशास्त्रे राष्ट्रियताविचारः

अष्टादशविद्यानां गणनाप्रसङ्गे अर्थशास्त्रस्य चर्चा भवति। विष्णुपुराणं वक्ति—

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश।।**
**आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः।**
**अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादश स्मृताः[१]।।**

मनुष्यवतीं भूमिमर्थपदेन चाणक्यो व्यपदिशति। स स्वयमेव ब्रूते– तस्याः पृथिव्या लाभपालनोपायानां शास्त्रमर्थशास्त्रमिति[२]। तत्र प्रथमवाक्यं भवति–पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि प्रायशस्तानि संहृत्यैकमिदमर्थशास्त्रं कृतम्। अमरकोशानुसारेण दण्डनीतिरेवार्थशास्त्रम्। आन्वीक्षिकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः[३]। धर्मशास्त्रं तु दण्डं धर्ममिति वदति। तद्यथा—

**दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति।**
**दण्डः सुप्तेषु जगर्ति दण्डं धर्मं विदुर्बुधाः[४]।**

अर्थशास्त्रकारश्चाणक्यो बहुभिर्नामभिः परिचितस्तानि-कौटल्य-कौटिल्य-चाणक्य-विष्णुगुप्तश्चेति। विष्णुपुराणानुसारेण कौटिल्यनामको ब्राह्मणविद्वान् अर्थशास्त्रस्य प्रणेता। तान्नन्दात् कौटिल्यो ब्राह्मणस्समुद्धरिष्यति। तेषामभावे मौर्याश्च पृथिवीं भोक्ष्यन्ति। कौटिल्य एव चन्द्रगुप्तं राज्येऽभिषिञ्चति। जयमङ्गलाटीकानुसारेण कौटिल्य इत्यभिधानं गोत्ररूपेण व्यवहृतम्। मूलनाम तस्य विष्णुगुप्तः। तद्यथा–कौटल्य इति गोत्रनिबन्धना विष्णुगुप्तस्य संज्ञा। असौ चणकदेशवास्तव्यत्वात्तस्य नाम चाणक्यः। एवं प्रकारेणासौ कौटल्य-चाणक्य-विष्णुगुप्तनाम्ना प्रसिद्धिमवाप। शिलालिपिप्रमाणं पुरस्कृत्य समालोचका मतमामनन्ति यत् चन्द्रगुप्तः ईशापूर्व ३२१ (BC) मध्ये राजाऽभूत्। अतः तत्परमेवार्थशास्त्रं तन्मन्त्रिचाणक्यद्वारा प्रादुर्बभूव। एतत्प्रमाणमर्थशास्त्र एव लभ्यते।

**येन शास्त्रं च शस्त्रं च नन्दराजगता च भूः।**
**अमर्षेणोद्घृतान्याशु तेन शास्त्रमिदं कृतम्[५]।।**

ग्रन्थोऽयं पञ्चदशाधिकरणेषु विभक्तः। एतेष्वधिकरणेषु ८० प्रकरणानि, १५० अध्यायाः, ३८० कारिकाश्च विद्यन्ते। एतेषु सर्वत्र राष्ट्रस्य रक्षायै पालनाय च चर्चा कृता वर्तते। चाणक्योक्ता मनुष्यवती भूमी राज्यपदेन राष्ट्रपदेन वा व्यपदिश्यते।

चाणक्य आदौ विद्यासमुद्देशं कृत्वा दण्डनीतिं विद्यास्थानेषु गृह्णाति। तद्यथा–**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः[६]** अत्र आन्वीक्षिकी हेतुविद्या। ऋग्यजुःसामनि त्रयी। कृषिः पशुपालनं वाणिज्यं च वार्त्ता। दण्डनीतिश्च राजनीति या खल्वर्थशास्त्रस्य विषयः। एतद्राज्यं राष्ट्रं वा सप्ताङ्गमिति चाणक्याभिमतम्। **तदमात्यपुरोराष्ट्रकोशदण्डबल-सुहृदिति।** राजा एतैः सप्तभिरङ्गै राज्यं पालयति। एकेन विनाऽन्यमङ्गं दुर्बलं भवति। क्रमेण सप्ताङ्गानां चर्चा शास्त्रानुसारिणी विधीयते।

**(क) अमात्यः**

प्रजापालनेऽमात्यानां बुद्धि–दूरदर्शिता–विश्वसनीयतायाश्च महती आवश्यकता वर्त्तते। अस्यान्तशुद्धिः सामर्थ्यं कार्यनैपुण्यं च परीक्षणीयम्। एतेषु सर्वश्रेष्ठो गुणो भवति राजभक्तिः। चाणक्यप्रणीतार्थशास्त्राधारेण विशाखदत्तेन मुद्राराक्षसनाटकं व्यरचि। तत्र चाणक्यस्य गुणाः वर्णिताः। स बुद्धिबलेन नन्दस्यामात्यं राक्षसं चन्द्रगुप्तपक्षे नियोजयति। अमात्यः कार्यमारभ्य समाप्तिपर्यन्तं नयति। मध्ये न त्यजति। मुद्राराक्षसस्यायं श्लोको नीतिशतकेऽपि भाति।

**प्रारभ्यते न खलु विघ्नभयेन नीचैः**
**प्रारभ्य विघ्नविहिता विरमन्ति मध्याः।**
**विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः**
**प्रारब्धमुत्तमगुणा न परित्यजन्ति[७]।।**

राजा देशकालकर्मानुसारं विभज्यामात्यान् योजयति। उक्तं च—

**विभज्यामात्यविभवं देशकालौ च कर्म च।**
**अमात्याः सर्व एवैते कार्याः स्युर्न मन्त्रिणः[८]।**

अस्माज्ज्ञायते मन्त्रिणोऽमात्येभ्यो भिन्नाः भवन्ति। मन्त्रिणां नियुक्तिविषये मनुस्मृतौ यथा—

**मौलाञ्छास्त्रविदं शूरॉल्लब्धलक्षान् कुलोद्‌गताम्।**
**साचिवान् सप्त चाष्टौ वा कुर्वीत सुपरीक्षितान्[९]।।**

**(ख) पुरः**

पुरस्य पर्यायो दुर्गं भवति। शत्रुराज्येभ्यः सुरक्षार्थं दुर्गस्य महती आवश्यकता वर्तते। जाङ्गलदेशे दुर्गनिर्माणं कर्तव्यम्।

**जाङ्गलं सस्यसम्पन्नमार्यप्रायमनाविलम्।**
**रम्यमानतसामन्तं स्वाजीव्यं देशमावसेत्[१०]।।**

यत्स्थानेऽधिका वृष्टिर्न भवति, मुक्तस्थानं प्रकाशयुक्तं सस्यसम्पन्नं च भवति तज् जाङ्गलमुच्यते। एतद् दुर्ग बहुविधं भवति तत्प्रकाराश्च—

**धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा।**
**नृदुर्गं गिरिदुर्गं वा समाश्रित्य वसेत् पुरम्[११]।।**

सयन्ततोऽर्धयोजनमात्रं घनमहावृक्षान्वितं वार्क्षम्। विंशतिक्रोशपर्यन्तं जलघनवृक्षघासादिभिरावृत्तं धन्वदुर्गम्, इष्टिकापाषाणादिभिरावृत्तं दुर्गमस्थानं महीदुर्गम्, गिरिपृष्ठे सङ्कीर्णमार्गयुक्तं दुरारोहं दुर्गं गिरिदुर्गम् एवं च चतुःपार्श्वं गजाश्वसेनादिभिरावृत्तं सुरक्षितं स्थानं मनुष्यदुर्गमुच्यते। पुनश्च दुर्गस्य चतुःपार्श्वं जलपूर्णं खातं मकरादिभिरावृत्तं स्यात्, येन शत्रुर्दुर्ग-मुल्लंघ्य प्रवेशाय समर्थः न स्यात्। शत्रुराज्यस्य दुर्गं कथं जेतव्यमिति नैके उपायाः प्रदर्शिताः सन्ति प्रकरणेऽस्मिन्।। स्वराज्यस्य रक्षणमेव सामदाम-दण्डभेदनीतिभी राज्ञा करणीयम्। उक्तं मनुना—

**सामादीनामुपायानां चतुर्णामपि पण्डिताः।**
**सामदण्डौ प्रशंसति नित्यं राष्ट्राभिवृद्धये[१२]।।**

पुनश्च यथा कृषको धान्यक्षेत्रात् सहोत्पन्नं धान्येतरतृणानि निष्काषयति तथैव राजा शत्रून् व्यापाद्य प्रजाः राज्ये रक्षति।

**यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति।**
**तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः[१३]।।**

**(ग) राष्ट्रम्**

राष्ट्रस्याखण्डतायाः स्थापना सुरक्षा च राजधर्मः। भारत-राष्ट्रस्य महिमानं प्रकटयता मनुना उच्यते।

**एतद्देशप्रसूतस्य सकाशदग्रजन्मनः।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः[१४]।।**

राष्ट्रे समागतानां जनपदानां गणना कृता वर्तते—

**सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम्।**
**तं देवनिर्मितं देशं ब्रह्मावर्तं प्रचक्षते[१५]।।**

तथैव—

**हिमवद्बिन्ध्ययोर्मध्ये यत् प्राग् विनशनादपि।**
**प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः।।**
**आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्।**
**तयोरेवान्तरं गिर्योरार्यावर्तं विदुर्बुधाः।।**
**कृष्णसारस्तु चरति मृगो यत्र स्वभावतः।**
**स ज्ञेयो यज्ञियो देशो म्लेच्छदेशस्त्वतः परः[१६]।**

स्वस्वराष्ट्रस्य रक्षा राज्ञा प्राणत्यागेनापि कर्तव्या। अर्थशास्त्रादर्शेन प्रभावितः कालिदासोऽपि वदति यत् प्रवर्त्ततां प्रकृतिहिताय पार्थिवः[१७]। अर्थात् राज्ञा प्रजापालनपूर्वकं राष्ट्ररक्षा कर्तव्या।

**(घ) कोशः**

राष्ट्रसंचालने कोशस्य महती आवश्यकताऽस्ति। एतदर्थं चाणक्येन वार्तायामन्तर्गतानां कृषिवाणिज्यगोपालनादीनां विकासोपायाः प्रदर्शिताः। तदर्थं ग्रन्थेऽस्मिन् शुल्काध्यक्ष–सूत्राध्यक्ष–सीताध्यक्ष–सुराध्यक्ष–सूनाध्यक्ष–नावाध्यक्ष–गोध्यक्ष–अश्वाध्यक्ष–हस्त्यध्यक्ष–रथाध्यक्षादीनां नियुक्तिप्रकारं विधाय राजकोशविवर्धनाय नैके उपायाः प्रदर्शिताः। एतत्समर्थकं सुभाषितं ब्रूते।

**अर्थेभ्यो हि विवृद्धेभ्यः सवृत्तभ्यस्ततस्ततः।**
**क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवाजगाः।।**

### (ङ) दण्डः

धर्मशास्त्रे दण्ड एव धर्मरूपेण स्वीकृतः। दण्ड एव प्रजाः स्वधर्मे नियोजयति। दण्डभयाज् जनाः पापान् नाचरन्ति। दण्ड एव वर्णाश्रमव्यवस्थां प्रयच्छति। चाणक्येन—

**तस्मात् स्वधर्मं भूतानां राजा न व्यभिचारयेत्।**
**स्वधर्मं सन्दधानो हि प्रेत्य चेह च नन्दति।।**
**व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।**
**त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति[१८]।।**

महाभारतेऽपि शङ्खलिखितकथामाध्यमेन लिखितः कथमात्मदण्डं स्वीकृतवान् तद् रोमहर्षणीयवृत्तान्त इदानीमपि आत्मानुशासनाय प्रेरयति। यदि मानवो धर्मेण तिष्ठति तर्हि दण्डस्यावश्यकता कदापि न भवति। उक्तं च महाभारते—

**न वै राज्यं न राजासीन्न न दण्डो न दण्डिकः।**
**धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्[१९]।।**

### (च) बलम्

राष्ट्रस्य रक्षार्थं शत्रूणां निवारणार्थं चमूरावश्यकी मन्त्रिसेनापत्यमात्या एव सैनिकानां नियोजनं कृत्वा दुर्गस्य रक्षां कुर्वन्ति। अर्थशास्त्रे उक्तमस्ति **'आप्तशस्त्रग्राहाधिष्ठितः सिद्धतापसं पश्येत् मन्त्रिपरिषदा सामन्तदूतम्। सन्नद्धोऽश्वं हस्तिनं रथं वारुढः सन् अनीकं गच्छेत्'**। अनीकं नाम सैन्यं, तेषां चोत्साहार्थं राजा तान् सस्नेहमवलोकयेत्। बहिर्गमनसमये पर्याप्तं सुरक्षाव्यवस्थां कृत्वा गच्छेत्। यतो हि राज्ञोऽकारणं बहवो गुप्तशत्रवो भवन्ति। उक्तं चाणक्येन—

**यथा न योगपुरुषैरन्यान् राजाधितिष्ठति।**
**तथायमन्यबाधेभ्यो रक्षेदात्मानमात्मवान्[२०]।।**

### (छ) सुहृत्

सीमान्तराष्ट्रेषु कानि मित्राणि केचन च शत्रवो भवेयुः। मित्रराष्ट्रैः सह सम्पर्कस्थापनेन शत्रुराष्ट्रैः सह युद्धवेलायामेते सहायकाः सिध्येयुः। एतदर्थं

चाणक्यो दूतप्रणिधिप्रसङ्गमवतारयति। स्वदेशे परदेशे च सेनानिवेशस्थानं, युद्धयोगस्थानम्, आत्मरक्षास्थानं चावकलयति। अनुज्ञातः सन् दूतः परराष्ट्रे स्वामिगुणप्रसादेनानुरागं जनयति। गूढपुरुषरूपेण दूताः शत्रुराज्यस्य बलाबलं राज्ञि निवेदयन्ति। उक्तं चार्थशास्त्रे—

**प्रेषणं सन्धिपालत्वं प्रतापो मित्रसंग्रहः।**
**उपजापः सुहृद्भेदो दण्डगूढातिसारणम्।।**
**बन्धुरत्नापहरणं चारज्ञानपराक्रमः।**
**समाधिर्मोक्षो दूतस्य कर्मयोगस्य चाश्रयः।**
**स्वदूतैः कारयेदेतत् परदूतांश्च रक्षयेत्।**
**प्रतिदूतापसर्पाभ्यां दृश्यादृश्यैश्च रक्षिभिः**[२१]**।।**

राजा एव राज्यस्य कारणं भवति। स स्वविनयेन विषयान् पालयति। अत्र विनयः पारिभाषिकः, विनयो नाम दण्डः। स द्विविधः कृतकः स्वाभाविकश्च। तस्मादुक्तं चाणक्येन—

**विद्याविनीतो राजा हि प्रजानां विनये रतः।**
**अनन्यां पृथिवीं भुङ्क्ते सर्वभूतहिते रतः**[२२]**।।**

राज्ञोऽपरगुणो भवति इन्द्रियजयः। **विद्याविनयहेतुरिन्द्रियजयः कामक्रोधलोभमानमदहर्षत्यागात् कार्यः।** अर्थशास्त्रे बहुविधेन्द्रियजय-विषये वर्णितमस्ति। **यथाचारेण चक्षुः, उत्थानेन योगक्षेमसाधनम्। कार्यानुशासनेन स्वधर्मस्थापनम्। विनयं विद्योपदेशेन लोकप्रियत्वमर्थ-संयोगेन। हितेन वृत्तिम्।**

राजनीतिकोविदाः धर्मशास्त्रपण्डिता उपदेशमाध्यमेन राज्ञामुपदेष्टारो भवन्ति। उक्तं चार्थशास्त्रे—**पुराणमिति वृत्तमाख्यायिकोदाहरणं धर्मशास्त्रमर्थशास्त्रं चेतिहासः। शेषमहोरात्रभागमपूर्वग्रहणं गृहीत-परिचयं च कुर्याद्, अगृहीतानामभीक्ष्यश्रवणं च।** एतेषां वृद्धपुरुषाणामपि बलिष्ठं चरित्रं स्यात्। तत्परवर्त्तिसाहित्ये नीतिशतके समभावेन वर्णितमस्ति।

**वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता**
**विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद् भयम्।**

**भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले-**
**ष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः[२३]।।**

परिस्थित्यनुसारेण राजनीतिर्भिन्नभिन्नस्थानेषु परिवर्तनीया भवति। सर्वत्र समाननीतिर्न शास्त्रानुमोदिनी भवति। एतत्समर्थकं नीतिशतके उक्तमस्ति—

**सत्याऽनृता च परुषा प्रियवादिनी च**
**हिंस्रा दयालुरपि चार्थपरा वदान्या।**
**नित्यव्यया प्रचुरनित्यधनागमा च**
**वाराङ्गनेव नृपनीतिरनेकरूपा[२४]।।**

**उपसंहारः**

शास्त्रसंवादि मतं भवति यत् **'श्रुतिस्मृतिविवादे तु श्रुतिरेव बलीयसी'** अर्थात् यत्कार्यं साधयितुं प्रमाणद्वयं साधकं भवति, तत्र श्रुतिप्रमाणमेव ग्राह्यम्। तथैव यदा धर्मशास्त्रार्थशास्त्रप्रमाणं कार्यं साधयितुमहमहमिकया आपद्येत, तदा धर्मशास्त्रप्रमाणं बलवत्तरं स्यात्। यतो हि धर्मशास्त्रप्रमाणमर्थशास्त्रप्रमाणतुलनया व्यापकं भवति। धर्मशास्त्रं मानवस्य सर्वविधं पक्षं तनोति। तत्र वर्ण–आश्रम–वर्णाश्रम–गुण–निमित्तसाधारणधर्माः सुविशदं वर्णिताः भवन्ति। परन्त्वर्थशास्त्रे एतेषु षट्सु गुणधर्मः प्रपञ्चितः। गुणाभिषिक्तस्य राज्ञः कर्तव्याकर्तव्यवर्णनपूर्वकं तद्द्वारा राष्ट्ररक्षाया विभिन्नोपायाः सप्रमाणं प्रपञ्चिताः सन्ति। तस्माद् धर्मशास्त्रप्रमाणं बलवदस्ति।

आधुनिकराजशास्त्रेऽर्थशास्त्रस्य सन्निवेशो न्यग्भाविकृतो दृश्यते। तस्य कारणं भवति यत् तदानीं राष्ट्रे राजतन्त्रव्यवस्था आसीत्। राजा एव धर्मस्य राष्ट्रस्य च कारणमासीत्। यदि राजा दुराचारी भविष्यति, तदा प्रजा दुर्दशाग्रस्था स्यात्। पुराणवर्णितवेनस्य चरित्रवर्णने रावणदुर्योधनादीनां शीलचर्यायां राष्ट्रस्य दुरवस्थामनुभवितुं शक्यते। अत एव चाणक्यः पूर्वाचार्याणामभिमतानि संगृह्य स्वानुभवं च संयुज्य सुविशालं ग्रन्थमरचयत्। तत्कालिनो राजा न एतदनुसृत्य राष्ट्रं पालितवन्तः येन भारतराष्ट्रं विखण्डितं बहिर्शत्रुकबलितम् अभवत्। यथा राजा तथा प्रजा। अतो राजा सर्वगुणसम्पन्नः स्यात्। राम एव एतत्प्रमाणम्। तस्माद् रामायणं साटोपमुद्घोषयति—

**रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः।**
**राजा सर्वस्य लोकस्य देवानामिव वासवः।।**

एतद् गणतन्त्रराष्ट्रे मन्त्रिणः प्रयत्नपूर्वकं ग्रन्थरत्नमिदमध्ययनं कुर्वन्तः राष्ट्रं पालयिष्यन्ति तर्हि पुनरेव धरापृष्ठे रामराज्यस्य परिकल्पना भविष्यति।

मनुस्मृती राष्ट्रस्य परिकल्पनामेकस्मिन्नेव पद्ये सूत्ररूपेण विधाय तस्य प्रपञ्चं विदधाति।

**स्वाम्यमातौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा।**
**सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते[२५]।।**

अन्यत्रापि—

**स्वाम्यमात्यश्च राष्ट्रञ्च दुर्गं कोषो बलं सुहृत्।**
**एतावदुच्यते राज्यं सत्त्वबृद्धिव्यपाश्रयः[२६]।।**

एतत्सप्ततत्त्वानि स्वीकृत्य सप्ताङ्गं राज्यमुच्यत इति कथ्यते। एतानि सप्ताङ्गानि चाणक्यार्थशास्त्रे व्यपदिष्टानि। एतच्छास्त्रस्य सारः षट् सोपानेषु प्रतिपादयितुं शक्यते—

(क) सुखस्य मूलं धर्मः।

(ख) धर्मस्य मूलमर्थः।

(ग) अर्थस्य मूलं राज्यम्।

(घ) राज्यस्य मूलमिन्द्रियजयः।

(ङ) इन्द्रियजयस्य मूलं विनयः।

(च) विनयस्य मूलं वृद्धसेवा।

आधुनिकराजशास्त्रे चाणक्यार्थशास्त्रस्य सन्निवेशनेन पुनरेव भारते रामराज्यस्य परिकल्पना स्यात्। एतद् राष्ट्रं सर्वैरनुकरणीयं भविष्यतीति।

**सन्दर्भाः**

१. विष्णुपुराणम्, ३.६.२९
२. अर्थशास्त्रम्, १५.१
३. अमरकोशः, १.६.५
४. मनुस्मृतिः, ७.१८
५. विष्णुपुराणम्, ४.२४

६. अर्थशास्त्रम्, अ.२
७. नीतिशतकम्, २७
८. अर्थशास्त्रम्, १.८.२८
९. मनुस्मृतिः, ७.५४
१०. मनुस्मृतिः, ७.६९
११. मनुस्मृतिः, ७.७०
१२. मनुस्मृतिः, ७.१०९
१३. मनुस्मृतिः, ७.११०
१४. मनुस्मृतिः, २.२०
१५. मनुस्मृतिः, २.१७
१६. मनुस्मृतिः, २.२१-२३
१७. अभिज्ञानशकुन्तलम्, ७
१८. अर्थशास्त्रम्, तृतीयाधिकरणम्
१९. महाभारतम्, शान्तिपर्व, १८ अध्यायः
२०. अर्थशास्त्रम्, १.२१.५२
२१. अर्थशास्त्रम्, १.१६.३७-३९
२२. अर्थशास्त्रम्, १.५.१७
२३. नीतिशतकम्, ६२
२४. नीतिशतकम्, ४७
२५. मनुस्मृतिः, ९.२९४
२६. कामन्दकी नीतिसारः अ.१

**सहायकग्रन्थाः**

१. Kautilya Arthashastra, T. Ganapati Shastri, Bharatiya Vidya Prakashana, Delhi, 1990.
२. कौटलीयमर्थशास्त्रम्, टीका, प.कुलमणिमिश्रः, सदाशिवकेन्द्रीयसंस्कृतविद्यापीठम्, पुरी, १९८६
३. धर्मशास्त्र का इतिहास, श्री.वी.काणे, उत्तरप्रदेश हिन्दी संस्थान, प्रयागः–१९८०
४. नीतिशतकम्, भर्तृहरि, टीका–डॉ. सोहनलालपाण्डेय, श्यामप्रकाशन, जयपुर–२०००
५. मनुस्मृतिः Vol.-I, II Com श्रीहरगोविन्दशास्त्री, चौखम्बा कृष्णदास अकादमी, वाराणसी–२००७

*

# सीतायाश्चरितं महत्

**यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः** अथवा **न गृहं गृहमित्याहुः गृहिणी गृहमुच्यते** इति अवधारणां निर्वहति भारतीयसमाजे आदिकविना महर्षिवाल्मीकिना विरचिते आदिकाव्ये रामायणे कीदृशी आसीत् मर्यादापुरुषोत्तमस्य धर्मपत्न्याः सीतायाः सामाजिकप्रतिष्ठा इति विचिकित्सा जायते मनसि। पुरुषनारीति जातिद्वयं विनिर्मितं भगवता सृष्टेः परिचालनार्थं न केवलं मनुष्यसमाजे, अपि तु इतरप्रजातिषु। तर्हि समाजस्य समृद्ध्यर्थ-मुभयस्य कीदृशं योगदानमपेक्षितं भवति, कियद् वा बलिदानमावश्यकमिति विचारणीयं भवति अस्मिन् विघटनकाले। यतो हि मनसः परिवर्तनेन युगस्य परिवर्तनं भवति, अतः समाजस्य उन्नतये उभयस्य चिन्तने परिवर्तनस्य आवश्यकता दरीदृश्यते।

**जन्मवृतान्तः**

कम्बरामायणानुसारं महालक्ष्म्याः अवतारभूता सीता महादेव्याः सरस्वत्याः अभिशापेन राज्ञः धर्मध्वजस्य कन्यारूपेण प्रादुर्भूता विष्णुं पतिरूपेण प्राप्तुं तपः तेपे। सौन्दर्येण आकृष्टः रावणः तां प्राप्तुमुपाया-न्तरमवलम्ब्य विवशमकरोत्, येन सा अग्नौ प्राविशत्। सः तस्याः भस्मं नीत्वा संस्मरणरूपेण लङ्कायामस्थापयत्। अपशकुनस्य अनिष्टस्य च कारणमिति नारदेन उपदिष्टः रावणः तं भस्मं स्वर्णमञ्जूषायां संस्थाप्य सागरे अक्षिपत्। कालक्रमेण तद् भस्म कन्यारूपमनयत्। मञ्जूषा च मिथिलानगरे भूमौ समाहिता, यज्ञार्थं भूमिकर्षणसमये राजा जनकः तामलभत। सीतया उद्घाटितायां मञ्जूषायां लब्धा कन्या 'सीतेति' ख्याता।

देवीभागवतानुसारं सीता मन्दोदर्याः प्रथमपुत्री आसीत्। श्वशुरस्य मयराक्षसस्य वचनानुसारं वंशस्य विनाशस्य कारणभूतां तां कन्यां रावणः मञ्जूषायां संस्थाप्य मिथिलायां परित्यजति स्म, या परवर्तिकाले सपरिवारं रावणं नाशयति स्म।

**स्वयंवरः**

प्राप्ते यौवने सीतायाः स्वयंवरार्थं प्रणमासीत् शिवधनुषभङ्गः। तद् कर्त्तुं केवलमयोध्याधिपतेः पुत्रः श्रीरामः समर्थोऽभवत्। तदनन्तरं सीतां तस्मै प्रदाय मिथिलाधिपः जनकः शान्तिमवाप्नोत्।[१] सीताऽपि भर्त्तृरनुगामिनी भूत्वा रामस्य प्रीतिवर्द्धनार्थं प्रयत्नशीला अभूत्।[२]

**अभिषेकः**

अयोध्यां प्रत्यागमनादनन्तरं मन्त्रिभिः परामृश्य सर्वगुणसम्पन्नं राममभिषिक्तं कर्त्तुं राजा दशरथः प्रयत्नशीलोऽभूत्। तस्मिन्नवसरे भर्तृधर्म सारिणी सीता उपवासादिकं संस्कारं पत्या सह आचरितवती।[३] तेन अयोध्यावासिनः सुखमनुभूतवन्तः।

**वनवासः**

विधेः विधानं भिन्नमासीत्। अतः मन्थरायाः प्ररोचनया विमातुः कैकय्याः कुचक्रेण पितुराज्ञापालनाय श्रीरामः वनं गन्तुं प्रचक्रमे। तं वनार्थमुद्यतं दृष्ट्वा सीतया सह अनुजः लक्ष्मणः वनं गन्तुमुपस्थापयत्[४], प्रतिबोधितः रामः तौ समं नीत्वा अन्ते वनमगच्छत्।[५] प्रस्थानकाले

---

१. अब्रतीज्जनको राजा कौसल्यानन्दवर्धनम्।
इयं सीता मम सुता सहधर्मचरी तव।। (१.७३.२६)

२. प्रिया तु सीता रामस्य दाराः पितृकृता इति। (१.७७.२६)
अन्तर्गतमपि व्यक्तमाख्याति हृदयं हृदा.....। (१.७७.२८)

३. कृतोपवासं तु तदा वैदेह्या सह राघवम्।
अयोध्यानिलयः श्रुत्वा सर्वः प्रमुदितो जनः।। (२.६.९)

४. तदलं ते वनं गत्वा क्षेमं नहि वनं तव।
विमृशन्निव पश्यामि बहुदोषकरं वनम्।। (२.२८.२५)
ये त्वया कीर्तिता दोषा वने वस्तव्यतां प्रति।
गुणानित्येव तान् विद्धि तव स्नेहपुरस्कृता।। (२.२९.२)
स मामनादाय वनं न त्वं प्रस्थितुमर्हसि।
तपो वा यदि वारण्यं स्वर्गो वा स्यात् त्वया सह।। (२.३०.१०)

५. सर्वथा सदृशं सीते मम स्वस्य कुलस्य च।
व्यवसामननुक्रान्ता कान्ते त्वमतिशोभनम्।। (२.३०.४१)

भर्तुरुपदेशं सर्वथा स्वीकर्त्तुं वधूः सीता सम्मतिं दत्तवती।[१] वने विचरणकाले देवनदीं गङ्गां दृष्ट्वा अयोध्यां प्रत्यागमनकाले पुनर्दर्शनाय तां याचते पत्नी सीता।[२] तस्मिन्नवसरे यज्ञरक्षार्थं श्रीरामः बहून् राक्षसान् हतवान्। सा वृत्तिः मनोभावं न परिवर्तयत्विति सीता उपदिष्टवती।[३] रामं प्रति आकृष्टा शूर्पणखा सीतां सपत्नीति मत्वा तां ग्रहितुं रावणस्य पुरतः तस्याः सौन्दर्यमवर्णयत्।[४] तां प्राप्तुं रावणः मातुलस्य मरीचस्य सहायतामनयत्, यः खलु स्वर्णमृगत्वेन तस्याः मनः अहरत्। तस्याः अभिलाषां निराकर्त्तुमसमर्थः श्रीरामः मृगस्य पश्चाद्धावनं कृत्वा दूरमगच्छत्। मरणकाले मृगः स्वरूपं प्राप्य असहायतां प्रकट्य्य सीतां लक्ष्मणं च तारस्वरेण आह्वयद् यत् श्रुत्वा विचलिता सीता सहायतार्थं गन्तुं लक्ष्मणं प्रैरयत्। परन्तु रामस्य पुरुषार्थे निश्चितः लक्ष्मणः न कस्यापि सहायतायाः आवश्यकता मन्यते। रामैव अयमिति मतं दत्तवान्। तेन रुष्टा सीता परुषवाक्येन तमतर्जयत्[५]। तेन भगवतः अनुग्रहेण तां संस्थाप्य लक्ष्मणः अगच्छत्। अत्र महालक्ष्म्याः अंशभूता सीता कथं मायायाः प्रभावेण प्रभाविता इति स्पष्टं भवति।

**सीताया अपहरणम्**

वनागमनात् पूर्वं रामेण विपदः आशङ्का कृता। तद् प्राप्ता अभूत्। सीतामेकाकिनीं प्राप्य रावणः संन्यासीरूपेण अप्राप्नोत्। प्रकृतं ज्ञातुमसमर्था सीता वनेऽपि गार्ह्यस्थधर्मस्य पालनं कर्त्तुं चेष्टिताऽभूत्[६]। आतिथ्ये व्यापृतां

---

१. करिष्ये सर्वमेवाहमार्यां यदनुशास्ति माम्।
अभिज्ञास्मि यथा भर्त्तुर्वर्तितव्यं श्रुतं च मे।। (२.३९.२७)
.....मर्हति। धर्माद् विचलितुं नाहमलं चन्द्रादिव प्रभा।। (२.३९.२८)

२. पुनरेव महाबाहुर्मया भ्रात्रा च संगतः।
अयोध्यां वनवासात् तु प्रविशत्वनघोऽनघे।। (२.५२.९१)

३. बुद्धिर्वैरं विना हन्तुं राक्षसान् दण्डकाश्रितान्।
अपराधं विना हन्तुं लोको वीर न मंस्यते।। (३.९.२५)

४. सा सुशीला वपुःश्लाघ्या रूपेणाप्रतिमा भुवि।
तवानुरूपा भार्या सा त्वं च तस्याः पतिर्वरः।। (३.३४.२०)

५. लोभातुं मत्कृते नूनं नानुगच्छसि राघवम्।
व्यसनं ते प्रियं मन्ये स्नेहो भ्रातरि नास्ति ते।। (३.४५.७)

६. इयं वृसी ब्राह्मण काममास्यतामिदं च पाद्यं प्रतिगृह्यतामिति।
इदं च सिद्धं वनजातमुत्तमं त्वदर्थमव्यग्रमिहोपभुज्यताम्।। (३.४६.३१)

तामनिन्द्यसुन्दरीं चिरं दृष्ट्वा राक्षसप्रवृत्तिं गोप्तुमसमर्थः रावणः वलाद् आकृष्य व्योममार्गे पुष्पकविमानेन गन्तुं प्रारब्धवान्। तदानीं वस्तुस्थितिं परिशील्य सीता तं निन्दितवती लक्ष्मणं च स्मृतवती।[१] रावणस्य तत् कर्म स्वकुलनाशस्य कारणं भविष्यतीति उक्तवती।[२] लङ्कां प्रति गमनकाले मार्गे वनलतां साक्षीरूपेण स्वव्यथामुक्तवती, आभरणानि च यत्र तत्र प्रक्षिप्तवती, येन पश्चात् रामलक्ष्मणयोः मार्गज्ञानं भवेत्।

मारीचं हत्वा सलक्ष्मणमुटजं प्रत्यागतः रामः रिक्तं वासस्थानं पश्यन् सीतां विना किंकर्त्तव्यविमूढोऽभूत्। अन्विष्यमाणः श्रीरामः क्रमशः जटायुहनुमत्सुग्रीवसम्पातिसहयोगेन लङ्कैव तद् स्थानं, यत्रास्ति रघुवंशस्य कुलवधूरिति ज्ञातवान्। ततः विचारानन्तरं पवनसुतं हनुमन्तं तत्र अन्वेषणार्थं प्रेषितवान्। हनुमान् अन्तःपुरे मदोदरीं दृष्ट्वा प्रथमतः सीतेति, ततः विचार्य न तथा भवितुमर्हतीति निधार्य इतस्ततः भ्रमन् पश्चाद् अशोकवाटिकायां दीनां सीतां दृष्ट्वा क्रमशः सैव सीतेति स्थिरीकृतवान्।[३] रावणः सीतां प्रभावयितुं विभिन्नोपायेन चेष्टामकरोत्। अतः **यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृतां, रावणः मन्यमाना मां सीता भीता भविष्यतीति** मत्वा क्रमशः तस्याः मनसि विश्वासमानीय तस्य पृष्ठारूढा सती रामसकाशं गन्तुमनुरुद्धवान्। सीता च बुद्ध्या निराकृतवती[४]। अन्ते तस्याः आभूषणं

---

१. हा लक्ष्मण महाबाहो गुरुचित्तप्रसादक।
हियमाणां न जानीषे रक्षसा कामरूपिणा।। (३.४९.२४)

२. अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः।
येषां त्वं कर्कशो राजा दुर्बुद्धिरजितेन्द्रियः।। (३.४८.२२)
नहि चक्षुःपथं प्राप्य तयोः पार्थिवपुत्रयोः।
ससैन्योऽपि समर्थस्त्वं मुहूर्त्तमपि जीवितुम्।। (३.५३.११)

३. स तां दृष्ट्वा महाबाहुर्भूषितां मारुतात्मजः।
तर्कयामास सीतेति रूपयौवनसम्पदा।
हर्षेण महता युक्तो ननन्द हरियूथपः।। (५.१०.५३)

४. अयुक्तं तु कपिश्रेष्ठ मया गन्तुं त्वया सह।
वायुवेगसंवेगस्य वेगो मां मोहयेत् तव। (५.३७.४५)
भर्तृर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरोत्तम।। (५.३७.६२)

प्रमाणरूपेण स्वीकृत्य प्रतिनिवृत्त:; येन वानराणां साहाय्येन राम: 'नलसेतुं' निर्माय युद्धार्थं लङ्कां प्राप्तवान्।

अस्मिन्नवसरे रावण: रामस्य मायाशिर: प्रदर्श्य राम: मृत इति विश्वासं प्रदाय सीतां स्वकीयां कर्तुमचेष्ठत। सामान्यविचलिता सीता शिरसि अदृश्यभूते वस्तुस्थितिं ज्ञातवती। युद्धावसरे शरपीडितौ रामलक्ष्मणौ मृतौ इति भावयितुं सीतां रणभूमिं नीतवन्त:। तौ दृष्ट्वा सीता स्वां कारणमिति अचिन्तयत्[१]। परन्तु सर्वं वस्तुस्थितिं त्रिजटा बोधितवती[२]।

युद्धे मायाविनं रावणं राम: पराजितवान्। अभिषेकानन्तरं विभीषणं सीतां ससम्मानमुपस्थापयितुमादिष्टवान्। नयनाभिरामं रामं दृष्ट्वा सीता चकितचकिताऽभूत्[३]। परन्तु अहो भाग्यस्य विडम्बना। यस्य पराक्रमस्य गानं कृत्वा अपहर्त्तु: गृहे कालं यापयितुं सीता समर्थाऽभूत्, स एव राम: तां यं कमपि गन्तुमवदत्[४]। सीता क्षणं किमपि उत्तरयितुमसमर्थाऽभूत्। तत: स्वाभिमानस्य रक्षार्थं तथा कथनमयौक्तिकमिति प्रत्यपादयत्[५]। तेन सन्तुष्ट: सन्नपि राम: लोकापवाददूरीकरणार्थमग्निपरीक्षाया: प्रस्तावमददात्। सीता तत् सहर्षं स्वीकृतवती[६]। अग्निदेवस्य नयनेन जना: प्रतिबोधिता:[७]। दिवंगत:

---

१. प्रायेण गतसत्त्वानां पुरुषाणां गतायुसाम्।
दृश्यमानेषु वनेषु परं भवति वैकृतम्।। (५.४८.३२)

२. भूत्वा तु सततं तस्या: सीता सुरसुतोपमा। कृताञ्जलिरुवा.....।।

३. विस्मयाच्च प्रहर्षाच्च स्नेहाच्च पतिदेवता।
उदैक्षत मुखं भर्त्तु: सौम्यं सौम्यतरानना।। (६.११४.३५)

४. यदर्थं निन्दिता मे त्वं सोऽयमासादितो मया।
नास्ति मे त्वय्यभिष्वङ्गो यथेष्टं गम्यतामिति।। (६.११५.२१)

५. अपदेशो मे जनकान्नोत्पत्तिर्वसुधातलात्।
मम वृत्तं च वृत्तज्ञ बहु ते न पुरस्कृतम्।। (६.११६.१५)
न प्रमाणीकृत: पाणिर्बाल्ये मम निपीडित:।
मम भक्तिश्च शीलं च सर्वे ते पृष्ठत: कृतम्।। (६.११६.१६)

६. कर्मणा मनसा वाचा यथा नातिचराम्यहम्।
राघवं सर्वधर्मज्ञं तथा मां पातु पावक:।। (६.११६.२७)

७. अक्लिष्टमाल्याभरणां तथारूपमनिन्दिताम्।
ददौ रामस्य वैदेहीमङ्के कृत्वा विभावसु:।। (६.११८.४)

राजा दशरथः एतदनन्तरमपि रामं प्रति पूर्वस्नेहं धारयितुमुपदिष्टवान्, अन्यासां कृते तत् कर्ता असाध्यमिति उक्तवान्[१]।

ततः सबान्धवः रामः सीतया पुष्पकविमानेन अयोध्यां प्राप्तवान् अभिषेकानन्तरं राज्यशासनेन व्यापृतः दुःखपूर्णमितिहासं विस्मर्तुं प्रारब्धवान्। परन्तु लोकव्यवहारः विचित्रो भवति। लङ्कायामनुष्ठितायाः अग्निपरीक्षायाः विषये अयोध्यावासिनां ज्ञानं नासीत्। **यद् यद् आचरति श्रेष्ठः तदेवेतर जनः, स यत् प्रमाणं कुरुते जनः तदनुवर्तते** नियमानुसारं भविष्यत्काले कुलवधूनामाचरणं कलुषितं भविष्यतीति विचार्य रामस्य सीतायाः ग्रहणं ते नाङ्गीकृतवन्तः[२]। राजा अनन्योपायः सीतां वने परित्यक्तुं लक्ष्मणमादिष्टवान्। सीता प्रथमतः तस्याः इच्छा दोहदरूपेण पूर्यते इति अचिन्तयत्। परन्तु प्रकृतं ज्ञात्वा रामस्य विरोधं न कृत्वा राजधर्मपालने सहायतां करिष्यतीति सीता लक्ष्मणेन सूचितवती[३]। अस्मात् सीतायाः चरितस्य महत्ता स्पष्टा भवति।

वाल्मीकेः आश्रमे निवसन् सीता लवकुशौ प्रसूतवती। तेन प्रशिक्षितौ तौ रामचरितं गायन्तौ अयोध्यायामपि प्रसिद्धिं प्राप्तवन्तौ। कालेन तौ स्वकीयौ इति ज्ञात्वा रामः सीतां गृहं प्रत्यानेतुमैच्छत्। वाल्मीकिः सीतायाः पवित्रतायाः समर्थनमकरोत्। परन्तु अबोधान् जनान् बोधयितुम-लौकिकाग्निपरीक्षां सत्यमिति प्रतिष्ठापयितुं राजा रामः द्विवारं परीक्षां दातुं सीतामनुरुद्धवान्। तेन उद्विग्ना सीता मातुः वसुमतेः कुक्षौ गन्तुमकामयत्। माताऽपि सादरं कन्यां गृहीतवती विधेर्विधानं सम्पादयितुम्।



१. सुदुष्करमिदं पुत्रि तव चारित्र्यलक्षणम्।
कृतं यत् तेऽन्यनारीणां यश्ये ह्यभिभविष्यति।।
न त्वं कामं समाधेया भर्तृशुश्रूषणं प्रति।
अवश्यं तु मया वाच्यमेव ते दैवतं परम्।। (६.११९.३५-३६)

२. लङ्कामपि पुरा नीतामशोकवनिकां गता।
रावणं वशमापन्नां कथं समो न कृत्स्यति।।

३. ............भविष्यति।
यथा हि कुरुते राजा प्रजास्तमनुवर्तते।। (७.११३.१८-१९)

# ब्रह्माण्डपुराणस्य वेदमूलकता

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः।।** (म.स्मृ २.२०) इति उद्घोषयती भारतवर्षस्य ज्ञानधारा अनादिकालादेव वैदिकी पौराणिकी च नाम्ना प्रवाहिता अस्ति। वैदिकसाहित्येषु यत्र तत्र पुराणशब्दस्य उल्लेखः तस्यावस्थितिं सूचयति[१]। **वेदोऽखिलो धर्ममूलम्, तथा च सर्वज्ञानमयो हि सः** (म.स्मृ. २.७) इति उद्घोषयन्तः धीमन्तः न केवलं भारतवर्षं मण्डयन्ति, अपि तु समग्रमानवजातेः प्रतिनिधित्वं निर्वहन्ति। किं नाम वेद इति चेत्— **प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते। एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता**[२]। इह अमुत्र च सुखं विधातुं समर्थो भवति भगवतः निःश्वासभूतः वेदः[३]। जगति जगत्पतेः सर्वश्रेष्ठसृष्टेः मानवस्य सर्वविधं नाम शारीरिकं मानसिकमाध्यात्मिकं च विकासं साधयितुं ज्ञानमाकिरति वेदः। सनातनधर्मस्य पृष्ठपोषकः **वसुधैव कुटुम्बकम्** मतस्य प्रचारकश्च, भारतीयसंस्कृतेः मूर्तरूपः वेदः सकलविधज्ञानानां स्रोतो भवति, परवर्तिसाहित्यस्य मूलभूततत्त्वं च प्रददाति।

भाषा परिवर्तनशीला भवति। सम्यक् संस्कारकृता संस्कृतभाषा अस्माद् वैशिष्ट्यात् अस्पृशा न भवति। संस्कृतभाषा द्विधा विभक्ता— वैदिकी लौकिकी च। वैदिकी भाषा कथितलौकिकभाषायाः व्यवहृतभाषायाः वा दूरे तिष्ठति। पुनश्च **परोक्षप्रियाः देवाः** इति यदुच्यते, एतदुरीकृत्य **व्याख्या बुद्धिबलापेक्षा** इति न्यायेन सूत्ररूपेण मन्त्रमध्ये सन्निहितं तथ्यमुद्घाटयितुं सततं प्रयासं कुर्वन्ति प्रतीकवाद-परोक्षवाद-रहस्यवादादिभिरनुप्राणितानि पुराणानि[४]। स्वकीयैः विशुद्धैः सदुपदेशैः समाजं शुद्धं विधाय सत्यं शिवं सुन्दरमादर्शमुपस्थापयति पुराणसाहित्यमिति नास्ति विप्रतिपत्तिः। विषयदृष्ट्या पुराणेषु वेदात् किमपि पार्थक्यं नास्ति, यदि भिन्नता समुपलभ्यते तर्हि उभयोर्वर्णनपद्धतावेव। पुराणानां वेदमूलकत्वादेव स्कन्दपुराणे प्रोक्तमस्ति यद् वेदे यन्निर्दिष्टं वर्तते, तत् स्मृतिष्वपि उपदिष्टं विद्यते, उभाभ्यां यत् प्रतिपादितमस्ति, तदेव पुराणेष्वपि सदृष्टान्तं विस्तरतो गीतमस्ति[५]।

**मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।**
**अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक्[६]।।**

इति अष्टादशमहापुराणानां यन्नामोल्लेखो भवति, तत्र ब्रह्माण्ड-पुराणस्य स्थानमन्तिमम्। एतद् वैष्णवपुराणं यद्यपि सात्त्विकम्, तथापि विषयदृष्ट्या राजसपुराणं भवति। मत्स्य-शिव-नारदपुराणानि अस्य नामकरणसार्थकतां प्रतिपादयन्ति—

**ब्रह्माण्डचरितोक्तत्वाद् ब्रह्माण्डं परिकीर्तितम्।**
**ब्रह्माण्डं चातिपुण्योऽयं पुराणानामनुक्रमः[७]।।**

ब्रह्मा अस्मिन् पुराणे ब्रह्माण्डस्य भविष्यद्युगस्यापि वर्णनं करोति। अस्य पुराणस्य भागत्रयमस्ति—पूर्वभागः, मध्यभागः, उत्तरभागश्च। पूर्वभागे प्रक्रियापाद-अनुषंगपादौ, मध्यभागे उपोद्घातपादः उत्तरभागे च उपसंहारपादः ललितोपाख्यानं च शोभन्ते[८]। अस्य श्लोकसंख्या १२००० ततोऽधिकं वा इति यत्र तत्र पुराणेषु उल्लेखो भवति। अस्य उत्पत्तिविषये नारदपुराणं सूचयति—

**व्यासो लब्ध्वा ततश्चैतां प्रभञ्जनमुखोद्गताम्।**
**प्रमाणीकृत्य लोकेऽस्मिन् प्रावर्तयदनुत्तमाम्।।**

यदुच्यते—

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।**
**वंशानुचरितं चैव पुराणं पञ्चलक्षणम्।।**

तदनुसारमस्मिन् पुराणे प्रारम्भे सृष्टेः विवरणं प्रदत्तमस्ति। ततः योगस्य वर्णनमस्ति। अरिष्टलक्षणं, ब्रह्मणः उत्पत्तिः, कुमाराणामुत्पत्तिः, पर्वतनदीनां वर्णनं, नवद्वीपानां वर्णनं, मन्त्रद्रष्टृणामृषीणां तेषां वंशानां युगानां च वर्णनमस्ति। अस्मिन् मन्वन्तरस्य स्वायम्भुवसर्गस्य च वर्णनमापतति। एवमेव उपोद्घातपादे प्रजापतिना स्ववंशस्य विस्तारविषये प्रथमतः वर्णनं कृतम्। काश्यपस्य प्रजानाम्, ऋषीणां वर्णनं, ततः वरुण-इक्ष्वाकु-मिथिलादिवंशानां वर्णनमस्ति। परशुरामस्य सहस्रार्जुनस्य, सगरस्य, अन्येषां च राज्ञां चरितमत्र प्रतिपादितमस्ति। उत्तरभागे च प्रलय-सृष्ट्यादीनां वर्णनं प्रदत्तमस्ति[९]।

श्रीमद्भागवतमहापुराणेऽपि वेदानुमोदिता सृष्टिप्रक्रिया यथातथ्यं वर्णिताऽस्ति।

१. **सर्गः**—अस्य पुराणस्य पूर्वभागे प्रकृतिसर्ग-वैकारिकसर्गयोः वर्णनमस्ति। तत्र कश्यप-सतरूपयोः प्रसङ्गोऽपि वर्णितः।

२. **प्रतिसर्गः**—अस्मिन् पुराणे नित्य-नैमित्तिक-प्राकृतिक-आत्यन्तिकप्रलयानां वर्णनमस्ति।

३. **वंशः**—पुराणस्यास्य द्वितीयभागे वंशवर्णनमस्ति।

४. **मन्वन्तरम्**—मन्वन्तरस्य युगानामपि वर्णनं प्रथमे षष्ठाध्याये च भवति।

५. **वंशानुचरितम्**—पुराणस्य अस्य तृतीयभागे वामनावतारस्य वर्णनमस्ति।

ब्रह्माण्डपुराणे वेदस्य उपबृंहणं कथं कृतमस्ति, तस्य उल्लेखः क्रियते—

१. **वराहावतारः**—ब्रह्माण्डपुराणस्य पूर्वभागे प्रक्रियापादे लोककल्पनमित्यभिधे चतुर्थेऽध्याये—'यत्स्वयं वर्तते कल्पो वाराहस्तन्नि-बोधत। प्रथमं साम्प्रतस्तेषां कल्पो वै वर्तते च यः' इति विष्णोः वराहावतारस्य वर्णनमस्ति[१०]।

२. **नृसिंहावतारः**—नृसिंहावतारस्य विस्तृतवर्णनमस्मिन् पुराणे अस्ति—

**ततः स बाहुयुद्धेन दैत्येन्द्रं तं महाबलम्।**
**नखैर्बिभेद संक्रुद्धो नार्द्राः शुष्का नखा इति[११]।।**

३. **वामनावतारः**—पुराणस्य अस्य तृतीयभागे वामनावतारस्य वर्णनमस्ति—

**स वामनो दिवं खं च पृथिवीं च द्विजोत्तमाः।**
**त्रिभिः क्रमैर्विश्वमिदं जगदाक्रमत प्रभुः[१२]।।**

४. **परशुरामावतारः**—परशुरामचरितस्य वर्णनमस्मिन् पुराणे विस्तृततया भवति—

**यस्मादुरः प्रतिहतं त्वया मातर्ममाग्रतः।**
**एकविंशतिवारं हि भृशं दुःखपरीतया।**
**त्रिःसप्तकृत्वो निःक्षत्रां करिष्ये पृथिवीमिमाम्[१३]।।**

५. **इक्ष्वाकुवंशः**—सूर्यवंशस्य वर्णनप्रसंगे इक्ष्वाकुवंशस्य वर्णनं द्वितीयेऽध्याये प्राप्यते[१४]।

६. **कृष्णप्रसङ्गः**—कृष्णावतारस्य वर्णनकाले देवक्याः षड्भगिनीभिः साकं वसुदेवस्य विवाहप्रसङ्गो आगच्छति, यस्य उल्लेखोऽन्यत्र न लभ्यते—

**पत्न्यस्तु वसुदेवस्य त्रयोदश वराङ्गनाः।**
**पौरवी रोहिणी चैव मदिरा चापरा तथा।।**

**तथैव भद्रवैशाखी सुनाम्नी पञ्चमी तथा।**
**सहदेवा शान्तिदेवा श्रीदेवा देवरक्षिता[१५]।।**

**धृतदेवोपदेवा च देवकी सप्तमी तथा[१६]।**

७. **गङ्गावतरणप्रसङ्गः**—अस्मिन् सगरपुत्राणामुद्धारविषये वर्णनमस्ति—

**भित्त्वा विशामि पातालं स्रोतसा गृह्यशङ्करम्।**

८. **नारदप्रसङ्गः**—ब्रह्माण्डपुराणे नारदः कश्यपस्य मानसपुत्ररूपेण न तु ब्रह्मणः मानसपुत्रत्वेन वर्णितोऽस्ति—

**मानसः कश्यपस्यासीत् दक्षशापवशात् पुनः।**
**तस्मात् स कश्यपस्याथ द्वितीयो मानसोऽभवत्[१७]।।**

९. **नीलकण्ठप्रसङ्गः**—शिवः कथं नीलकण्ठः सञ्जातः, तस्य वर्णनं समुद्रमन्थनप्रसङ्गे भवति—

**पिबतो मे महाघोरं विषं सुरभयप्रदम्।**
**कण्ठः समभवत्तूर्णं कृष्णो वै वरवर्णिनि[१८]।।**

१०. **गोवर्धनवर्णनम्**—

**सह्यस्य चोत्तरान्तेषु यत्र गोदावरी नदी।**
**पृथिव्यामपि कृत्स्नायां स प्रदेशो मनोरमः।।**
**तत्र गोवर्धनं नाम पुरं रामेण निर्मितम्[१९]।**

११. **सृष्टिवर्णनम्**—ब्रह्मणः जगतः सृष्टिविषये अत्र वर्णनमस्ति। अस्य नामकरणं यद् ब्रह्माण्डं भवति, तदपि वेदवर्णितस्य हिरण्यगर्भस्य स्मृतिं ददाति[२०]।

१२. **आश्रमधर्मः**—

**अष्टाशीतिसहस्राणि प्रोक्तानि गृहमेधिनाम्।**
**अर्यम्णो दक्षिणं ये तु पितृयानं समाश्रिताः।**
**गृहमेधिनस्त्वसंख्येयाः श्मशानान्याश्रयन्ति ते**
**अष्टाशीतिसहस्राणि निहिता ह्युत्तरापथे।।**
**ये श्रूयन्ते दिवं प्राप्ता ऋषयो ह्यूर्ध्वरेतसः[२१]।**

**शब्दनिर्वचनम्**—अस्मिन् पुराणे बहूनां शब्दानां निर्वचनमस्ति। यथा—

**ऋषिः**—

**गत्यर्थादृषतेर्धातोर्नाम निर्वृतिरादितः।**
**यस्मादेव स्वयंभूतस्तस्माच्चाप्यृषिता स्मृता[२२]।।**

**असुरः**—

**असुः प्राणः स्मृतो विज्ञैस्तज्जन्मानस्ततोऽसुराः[२३]।**

**देवः**—

**ततो मुखात् समुत्पन्ना दीव्यतस्तस्य देवताः।**
**यतोऽस्य दीव्यतो जातास्तेन देवाः प्रकीर्तिताः[२४]।।**

**यजुर्वेदः**—

**यच्छिष्टं तु यजुर्वेदे तेन यज्ञमयुञ्जत।**
**यजनात् स यजुर्वेद इति शास्त्रविनिश्चयः[२५]।।**

ब्रह्माण्डपुराणं वेदस्य उपबृंहणं कृत्वा स्वस्य वेदमूलकतां स्पष्टीकरोति। अस्य श्रवणेन चतुर्वर्गफलप्राप्तिर्भवति[२६]। यदि कोऽपि वेदान् वेदाङ्गानि च ज्ञात्वा पुराणं न जानाति, तर्हि विचक्षणः न भवति—

**तेनाधीतं पुराणं स्यात्सर्वं नास्त्यत्र संशयः।**
**यो विद्याच्चतुरो वेदान् साङ्गोपनिषदान् द्विजाः[२७]।।**

## सन्दर्भसूची

१. क–ऋचः सामानि छन्दांसि पुराणं यजुषा सह।
उच्छिष्टाज्जज्ञिरे सर्वे दिवि देवा दिवि श्रितः।। (अ.वे.११.७.२४)
ख–एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासपुराणम्। (बृ.उ. २.४.१०)
ग–चाक्लृप्ते तेन ऋषयो मनुष्या यज्ञे जाते पितरो नः पुराणे।
पश्यन् मन्ये मनसा चक्षुसा तान् य इमं यज्ञमयजन्त पूर्वे।।(ऋ. वे. १०.१३०.६)

२. न्यायवार्तिकम्, कुमारिलभट्टस्य।

३. इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः। (ऋग्वेदभाष्यभूमिका)

४. इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति। (म.भा. आदिपर्व १.२६८)

५. यच्च दृष्टं हि वेदेषु तद्दृष्टं स्मृतिभिः किल।
उभाभ्यां यत्तु दृष्टं हि तत् पुराणेषु गीयते।। (स्क.पु.रे.ख. १.२२)

६. देवीभाग.पु. १.३.२

७. शि.पु. ४४.१४३

८. शृणु वत्स प्रवक्ष्यामि ब्रह्माण्डाख्यं पुरातनम्।
तच्च द्वादशसाहस्रं भाविकल्पकथायुतम्।।
प्रक्रियाख्योऽनुषङ्गाख्य उपोद्घातस्तृतीयकः।
चतुर्थ उपसंहारः पादाश्चत्वार एव हि।।
पूर्वपादद्वयं पूर्वो भागोऽत्र समुदाहृतः।
तृतीयो मध्यमो भागश्चतुर्थस्तूत्तरो मतः।। (ना.पु. ४.१०९)

९. हिरण्यगर्भः सोऽण्डेऽस्मिन्प्रादुर्भूतः चतुर्मुखः।
सर्गे च प्रतिसर्गे च क्षेत्रज्ञो ब्रह्मसम्मितः।। (ब्र.पु. १.३.२६)

१०. क. यत्स्वयं वर्तते कल्पो वाराहस्तन्निबोधत।
प्रथमं साम्प्रतस्तेषां कल्पो वै वर्त्तते च यः।। (ब्र.पु. १.४.३३)
ख. वराहेण पृथिवी संविदाना सूकराय वि जिहीते मृगाय। (अ.वे. १२.१.४८)
ग. आपो वा इदमग्रे सलिलमासीत्।
तस्मिन् प्रजापतिर्वायुर्भूत्वाऽचरत्। स इमामपश्यत् तां वराहो भूत्वाऽहरत्। (तै.सं. ७.१.५.१)

११. ब्र.पु. ३.३.२९।

१२. क. ब्र.पु. ३.७३.७८

ख. इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूढमस्य पांसुरे।। (ऋ.वे. १.२२.१७)

ग. त्रीणि पदा विचक्रमे विष्णुर्गोपा ,अदाभ्यः।
अतो धर्माणि धारयन्।। (ऋ.वे. १.२२.१८)

१३. ब्र.पु. ३.३०.७२-७३

१४. इक्ष्वाकुवंशः—

यस्येक्ष्वाकुरुपव्रते रेवान् मराय्येधते।
दिवीव पञ्च कृष्टयः।। (ऋ.वे. १०.६०.४)

१५. कृष्णाय। छा.उप. ३.१७.६

१६. ब्र.पु. ३.७१.१६०-१६२

१७. ब्र.पु. ३.२.१४

१८. ब्र.पु. २.२५.८६

१९. ब्र.पु. २.१६.४३-४४

२०. पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम्। ऋ.वे. १०.९०.२

२१. ब्र.पु. २.३५.११०-११३

२२. क. ब्र.पु. २.३२.८७

ख. ऋषति प्राप्नोति सर्वान् मन्त्रान् ज्ञानेन पश्यति संसारपारं वा।
ऋष इगुपधात् कित् (४.५५९) उणादिसूत्रेण इन् किच्च।

२३. ब्र.पु. २.८.५

२४. ब्र.पु. २.८.९

२५. ब्र.पु. २.३४.२२

२६. इदं यो ब्रह्मणो विद्वानितिहासं पुरातनम्।
श्रूयाच्छ्रावयेद्वापि तथाऽध्यापयतेऽपि च।।
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितम्।
कृष्णद्वैपायनेनोक्तं पुराणं ब्रह्मवादिना।। (ब्र.पु. ४.४.४७,५०)

२७. ब्र.पु. १.१.१७०

*

# पुराणसन्दर्भितसुभाषितेषु पर्यावरणचिन्तनम्

यथा वेदा भगवतो निश्वासभूतास्तथैव वनस्पतयः, पशवः, पक्षिणोऽपि च विराजः पुरुषात्समुद्भूता इति तत्र वेदाः प्रमाणम्।

**तस्माद् यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।**
**पशूस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये।।**
**तस्मादश्वा अजायन्त ये के चोभयादतः।**
**गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः[१]।।**

अतो यथा मनुष्याणामधिकारोऽस्यां पृथिव्यामस्ति तथैव पशुपक्षिणाम्। परन्तु वास्तविकतया मनुष्याणामधिकारोऽधिकं वरीवर्ति इति सर्वैरनुभूयते। सर्वे एव जागतिका ईश्वरप्रदत्तवातावरणे निवसन्ति। वातावरणस्य सुरक्षायां वैदिका ऋषयश्चिन्तनपराः। तेषां मुखात्सर्वेषां संरक्षणाय शुभाशंसा निःसरति।

**ऊँ द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः। वनस्पतयः शान्तिर्विश्वदेवाः शान्तिर्ब्रह्म शान्तिः सर्वं शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि[२]।**

पुनश्च वैदिकऋषिः सचराचरं विश्वं मधुमत् कर्तुमिच्छति। ऊँ मधु वाता ऋतायते। मधु क्षरन्ति सिन्धवः। माध्वीर्नः सन्तोषधीः। मधु नक्तमुतोषसो, मधुमत्पार्थिवं रजः मधु द्यौरस्तु नः पिता। मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः। ऊँ मधु मधु मधु। पञ्चभौतिकमाकाशवाय्वग्निजलपृथिवीरूपं भगवतो बाह्यरूपम्। परंब्रह्म पञ्चभौतिके स्वरूपे प्रतिकारणं व्याप्नोति। अत एव वैदिका ऋषय सम्यग्रूपेण एतेषां संरक्षणार्थं चिन्तनपरा आसन्। प्राचीनकाले पर्यावरण-प्रदूषणसमस्या नासीत्। परन्तु परवर्तिकाले विशेषतः पुराणसमये व्यासदेवस्य तत्कृते चिन्ता समजनि। अतो वैदिकसन्देशं स्मारं स्मारं पञ्चभूतानां संरक्षणाय बहव उपायाः परिकल्पिताः, यतो हि पञ्चभूतेषु सचराचरं सर्वविधसर्जनं सन्निविष्टम्। सन्दर्भितशोधनिबन्धे केवलं पृथिवीसम्बन्धितं पर्यावरणमुपन्यस्तमस्ति। अस्मिन् क्रमे वनस्पतयः सर्वे पशवः पक्षिणश्च गृह्यन्ते।

प्रथनात् पृथिवी इत्याहुः यास्काचार्यः। बहुपर्यायवचनेयं पृथिवी—गौ, ग्मा, क्ष्मा, क्षामा, क्षोणी, क्षितिः, अवनी, उर्वी, मही, रिपः, अदितिः, इला, निऋतिः, भूः, भूमिः, पूषा, गातु; गोत्रमिति। अमरकोशानुसारं पृथिवीपर्यायवाचिनः शब्दाः भवन्ति—

**भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा।**
**धरा धरित्री धरणी क्षोणी ज्या काश्यपी क्षितिः।।**
**सर्वंसहा वसुमती वसुधोर्वी वसुन्धरा।**
**गोत्रा कु पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही[४]।।**

बहुभिः पर्यायैर्विशेषिता पृथ्वी यज्ञात्समुद्भूता। पृथिवी च मे यज्ञेन कल्पताम्। पृथिव्या अङ्गानि सन्ति वर्णितानि यजुर्वेदे। तानि यथा—

**अश्मा च मे गिरयश्च मे पर्वताश्च मे श्यामं च मे।**
**लोहं च मे त्रपु च मे यज्ञेन कल्पताम्[५]।।**

रामायणमहाभारते इति आर्षकाव्येऽतिरिच्य सन्ति विपुलानि पुराणसाहित्यानि येषु महापुराणानि सन्त्यन्यतमानि। तानि यथा—

**मद्वयं भद्वयं चैव ब्रत्रयं वचतुष्टयम्।**
**अनापलिंगकूस्कानि पुराणानि प्रचक्षते[६]।।**

मद्वयेन मत्स्यं मार्कण्डेयं च, भद्वयेन भविष्यं भागवतं च, ब्रत्रयेण ब्रह्म, ब्रह्माण्डं, ब्रह्मवैवर्त्तं च, वचतुष्टयेन वायुवामनवराहविष्णुपुराणानि च गृह्यन्ते। तदनु प्रत्यक्षरमेकमेकं पुराणम् अ—अग्निपुराणम्, ना—नारदपुराणम्, प—पद्मपुराणम्, लिं—लिङ्गपुराणम्, ग—गरुडपुराणम्, कू—कर्मपुराणम्, स्क—स्कन्दपुराणं च स्वीक्रियन्ते, आहत्य सन्ति चैतान्यष्टादशसंख्यकानि। सन्दर्भेऽस्मिन् पुराणेष्वेतेषु वनस्पतिगजवाजिवादीनां संरक्षणोपायाः सन्ति प्रतिपादिताः। पुनश्च पुराणानि भवन्ति सूक्तीनामाकरः। भिन्नासु भिन्नासु सूक्तिष्वपि पर्यावरणसंरक्षणोपायाः विद्यन्ते सरहस्यमुपदिष्टा। ते पृथक्-पृथक् समुदाह्रियन्ते।

**गजाश्वाः**

अधुनाऽश्वः शक्तेः परिचायकः। अश्वशक्त्यनुसारं (Horse Power) मन्त्राणां निर्माणं भवति। पुराणकाले श्रेष्ठवाहनत्वेनाश्वानां

प्रसिद्धिरासीत्। एतेषां चिकित्सा पृथक्तया भवति स्म। आयुर्वेदे कृते शालिहोत्रनाम्नेयं चिकित्सापद्धतिः प्रसिद्धा। गजशास्त्रमधिकृत्य पुराणेषु महती चर्चा कृताऽस्ति। सोमपुत्रो बुधो गजवैद्यक आसीत्।

**तारोदरविनिष्क्रान्ताः कुमारश्चन्द्रसन्निभः।**
**सर्वार्थविद् धीमान् हस्तिशास्त्रप्रवर्तकः।।**
**नाम्ना यद् राजपुत्रोऽयं विश्रुतं गजवैद्यकम्।**
**राज्ञः सोमस्य पुत्रत्वाद् राजपुत्रो बुधः स्मृतः[७]।।**

गजानां श्रेष्ठत्वं, युद्धसमये कथं गजसाहाय्येन विजयो भवति। तत्सर्वं सुभाषितानां माध्यमेन वर्णितमस्ति। यत्र सत्यं तत्र धर्मो वरीवर्ति। धर्माद् धनं जायते। यत्र रूपं तत्र शीलमस्ति। तथैव यत्र गजः तत्र जयोऽवश्यम्भावीति। यथा—

**यतः सत्यं ततो धर्मो यतो धर्मस्ततो धनम्।**
**यतो रूपं ततः शीलं यतो नागस्ततो जयः।।**
**यतो गजैर्विना राज्ञां राज्यशोभा न जायते।**
**जयप्रतापौ सैन्यस्य रक्षा तस्मादिहोच्यते[८]।।**

सिंहं विना वनस्य, राजानं विना राष्ट्रस्य, शौर्यं विना च शस्त्रस्य किमपि महत्त्वं नास्ति, तथैव हस्तिनं विना सैन्यस्य महत्त्वं नास्ति।

**यद्वद्वनमसिंहं च यद्वद् राष्ट्रमपार्थिवम्।**
**यद्वच्छौर्यमशस्त्रं तु तद्वत्सैन्यमकुञ्जरम्[९]।।**

प्राकारगोपुराट्टालिकानां भञ्जनकर्मणि नाग एव पाटवं धत्ते। इदानीं **बुलडोजरं** यन्त्रं यत्कर्म करोति पुरा नागद्वारा तत्कर्माभूत्।

**प्राकारगोपुराट्टालकपाटोच्चाटनादिषु।**
**भञ्जने मर्दने चैव नागा वज्रोपमाः स्मृताः।।**
**स्त्रियोऽवतारयन्त्येते मृण्मया एव निश्चलाः।**
**नास्ति हस्तिसमो बन्धुर्नास्ति हस्तिसमः सखा[१०]।।**

गजवदश्वानामपि तुरगाणां महत्त्वं युद्धकाले कथं भवति, तत्सर्वं सुभाषितमाध्यमेन वर्णितमस्ति।

**अश्वा यस्य जयस्तस्य यस्याश्वास्तस्य मेदिनी।**
**अश्वा यस्य यशस्तस्य यस्याश्वास्तस्य काञ्चनम्[११]।।**

शत्रूणां हननं वेगेन गमनं विघ्नहरणं च वाजिप्रभावादेव भवति।

**निपत्य युधि वेगेन मिषतां सर्वधन्विनाम्।**
**शत्रुं निहत्य यात्येकः शूरो वाजिप्रभावतः[१२]।।**

अश्वभयाद् बलानामपि शत्रू रात्रौ सम्यक् न शेते प्रतिपक्षस्य तुरगबलत्वाद् आक्रमणशङ्कया। उक्तं च—

**दूरस्थोऽपि बली शत्रुर्न शेते रजनीष्वपि।**
**तस्य भीत्या गृहे यस्य हरयो वेगवत्तराः[१३]।।**

एवंविधैः गजाश्वानां महिमानमुद्भावयति प्राचीनवाङ्मयम्। अत एतेषां चिकित्साव्यवस्थाऽपि आयुर्वेदशास्त्रे कृता वर्तते। ये योगिन आयुर्वेदशास्त्रेषु सिद्धाः सन्ति तेषां योगप्रकारः कल्पयोगनाम्ना ज्ञायते। वृक्षायुर्वेदप्रकरणेऽग्निपुराणे औषधीयगुणविशिष्टानां बहूनां वृक्षाणां सूची दर्शिता। एषु चिकित्सकेषु काश्यपपराशरसारस्वतप्रमुखाः संसिद्धिं लेभिरे।

**गोरक्षा**

कठोपनिषदि नचिकेता स्वपित्रा वाजश्रवसा (दानेन) दीयमानानां गवां शोचनीयां स्थितिमवलोक्य दुःखातिशयेन पितुर्विरोधं कृत्वा शापप्रभावेण यमालयं व्रजति। गवां शरीरे त्रयस्त्रिंशत्कोटिदेवताः निवसन्ति। खुरादारभ्य विषाणं यावत्सर्वत्र देवाङ्कितानि सन्ति वाङ्गानि। गवां जीवनरक्षणे यदि कश्चनानृतमपि ब्रूयात्तथापि स दोषभाङ् न भवति।

**कामिनीषु विवाहेषु गवां मुक्तौ तथैव च।**
**प्राणत्यागे समुत्पन्ने शपथे नास्ति पातकम्।।**

(पद्म. पु. १८/३९५)

**पादपाः**

तरूणां रोपणविषये तेषां च रक्षामधिकृत्य पुराणेषु सन्ति नैके श्लोकाः, ये खलु मानवान् तेषां संरक्षणार्थमुत्प्रेरयति। यदि मनुजः स्वजीवनावधौ पुष्करिणीं न निर्माति वृक्षान् न रोपयति, तस्य जन्म निरर्थकमिति मनुते।

**न खनिताः पुष्करिण्यो रोपिता न महीरुहाः।**
**मातुर्यौवनचौरेण तेन जातेन किं कृतम्**[१४]**।।**

पुत्रादपि वृक्षरोपणं श्रेयस्करं यतो हि मूर्खापत्यानि कुलं दूषयन्ति। वृक्षश्छायादानेन सर्वं शीतलयति।

**बहुभिर्बत किं जातैः पुत्रैर्धर्मार्थवर्जितैः।**
**वरमेकं पथि तरुर्यत्र विश्रमते जनः**[१५]**।।**

कूपवापीतडागादीनां खननात्पुत्रोत्पादनादपि तरुवररोपणं महनीयं कर्मास्ति।

**दशकूपसमा वापी दशवापीसमो ह्रदः।**
**दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः**[१६]**।।**

तडागादीनां खननं जीर्णकूपादीनामुद्धारो जनानां वृक्षाणां चोपकाराय भवति। एतत्कर्मद्वारा कुलस्योद्धारो जायते।

**अथ वा देवमानेन कर्तव्यं भूतिमिच्छता।**
**यस्तडागं नवं कृत्वा जीर्णं वा नवतां नयेत्।।**
**सर्वं कुलं समुद्धृत्य स्वर्गलोके महीयते।**
**वापीकुपतडागाश्च उद्यानप्रवहास्तथा।।**
**पुनः पुनश्च संस्कार्यो लभते मौक्तिकं फलम्।**
**गुणानां च प्रमाणेन प्रतिमानं विभागतः**[१७]**।।**

महाद्रुमाः फलहीना अपि शीतलच्छाया प्राप्त्यर्थं रोपणीयाः। अतः सुभाषितं विशिनष्टि।

**सेवितव्यो महावृक्षः फलच्छायासमन्वितः।**
**यदि दैवात्फलं नास्ति छाया केन निवार्यते**[१८]**।।**

औषधीयगुणगणभरेण केचन वृक्षास्तुलसीप्रभृतयो गुणकारिणो भवन्ति। तेषां वपनेऽपि केचन नियमाः पालनीयाः। यथा नदीतटे श्मशाने स्ववासस्थानस्य दक्षिणदिशि तुलसी न रोपणीया।

**नदीतीरे श्मशाने वा स्वगृहस्य च दक्षिणे।**
**तुलसीरोपणं कृत्वा याति कर्ता यमालयम्**[१९]**।।**

एवं प्रकारेण वृक्षेष्वश्वस्थस्य महिमाऽत्यधिकं बिभर्ति। गीतायामसौ साक्षान्नारायणत्वेन वर्णितः "अश्वत्थः सर्ववृक्षाणाम्। (गीता १०/२६) तस्मात्सर्वे आस्तिका यत्र कुत्रापि वर्द्धितमश्वत्थं बिभ्यति। पद्मपुराणानुसार-मश्वत्थरोपणं क्रतुशतेभ्योऽधिकं फलं यच्छति।

**अश्वत्थरोपणं कृत्वा जलाशयसमीपतः।**
**यत्फलं लभते मर्त्यो न तत् क्रतुशतैरपि[२०]।।**

विष्णुधर्मोत्तरपुराणानुसारमेकोऽपि वृक्षः पुत्रसमो भवति, देवान् प्रीणाति, सेवते चातिथिम्।

**एकोऽपि रोपितो वृक्षः पुत्रकार्यकरो भवेत्।**
**देवान् प्रसूनैः प्रीणाति छायया चातिथींस्तथा[२१]।।**

किं वा माहात्म्यं ब्रूमः। अश्वत्थादिवृक्षरोपणेन नरो नरकं न व्रजेत्।

**अश्वथमेकं पिचुमन्दमेकं न्यग्रोधमेकं दशतितिण्डिकम्।**
**कपित्थबिल्वामलकत्रयं च पञ्चाम्रवापी नरकं न पश्येत्[२२]।।**

लतासु ताम्बूलं कथं गुणकरं स्वास्थप्रदं च भवति सुभाषितमाध्यमेन निर्दिश्यते।

**ताम्बूलं कटुतिक्तमुष्णमधुरं क्षारं कषायान्वितं**
**वातदमं कृमिनाशनं द्युतिकरं दुर्गन्धिनिर्वासनम्।**
**वक्त्रास्याभरणं विशुद्धिकरणं कामाग्निसन्दीपनं**
**ताम्बूलस्य सखे ! त्रयोदश गुणाः स्वर्गेऽप्यमी दुर्लभाः।।**

**पुनश्च**

**ताम्बूलं मुखरोगनाशि निपुणं संवर्धनं तेजसो**
**नित्यं जाठरवह्निवृद्धिजननं दुर्गन्धिदोषापहम्।**
**वक्त्रालङ्करणं प्रहर्षजननं विद्वन्नृपाग्रे रणे**
**कामस्यायतनं समुद्भवकरं लक्ष्म्याः सुखस्यास्पदम्[२३]।।**

वृक्षरोपणेन न केवलमन्येषामुपकारो भवति, अपि तु रोपयितुः पापनाशो भवति।

**पापनाशः परा सिद्धिर्वृक्षाणां च प्रतिष्ठया[२४]।।**

## तपोवनम्

इदानीं या परिकल्पनाऽभयारण्यमधिकृत्य पर्यावरणविदः कुर्वन्ति, तत्पूर्वं तपोवननाम्ना ख्यातमासीत्। तपोवनं राज्ञोऽधिकारे नासीत्। गुरुकुलस्य कुलपतिरेवाधिपतिर्बभूव। राजाऽपि विनीतवेशेन आज्ञापुरः सरमाश्रमं प्रविशति स्म। आश्रमेऽहिंसा एव परमो धर्मः। यथा कौर्मे—

**कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा।**
**अक्लेशजननं प्रोक्ता त्वहिंसा परमर्षिभिः**[२५]**।।**

तपोवनस्यायं प्रभावो यत् स्वजातिगतमात्सर्यं विसृज्य पशवः पक्षिणश्च तत्र निवसन्ति। सिद्धान्तममुमाधारीकृत्य पुराणेषूपबृंहितानि वैदिकसिद्धान्तगर्भितानि तपोवनानि।

## उपसंहारः

**सर्वे वनस्पतय औषधय** इति वैदिको राद्धान्तः। वृक्षस्यामूलाग्रं मधु स्रवति। मधुमन्मूलं मधुमदग्रमासां मधुमन्मध्यं वीरुधां बभूव। मधुमत् पर्णं मधुमत् पुष्पमासाम्[२६]। अस्मादेव कारणात् पुराणवाङ्मयं वनस्पतीनां रक्षाविषये जागर्तितराम्, यद्यरण्यं न भवति तर्हि व्याघ्रा अपि न भवेयुः व्याघ्राणां भयेन जना अरण्यस्य वृक्षान् न कर्तयन्ति। वृक्षाः सन्ति चेत्, अनावृष्टिर्न भवति। समयानुसारं वारिदो वर्षति चेद् पृथिवी सस्यशालिनी भवति। तस्मादुक्तम्—

**काले वर्षतु पर्यन्यः पृथिवी सस्यशालिनी।**
**लोकोऽयं क्षोभरहितो ब्राह्मणाः सन्तु निर्भयाः।।**

पर्यावरणस्य संरक्षणार्थं सर्वे कालिदासप्रभृतयः कवयस्तपोवनसंस्कृतेः संपोषका दृश्यन्ते। दुष्यन्तः कण्वाश्रमप्रवेशसमये "विनीतवेशेन प्रवेष्टव्यानि तपोवनानि नाम" इति विचिन्त्य राजकीयपरिधानमुत्सृज्य नागरिकवेशेन प्रविशति। रघुवंशे वृक्षाणां रक्षार्थं पार्वतीद्वारा कृतकपुत्रत्वेन सिंहोऽपि स्थापितो, येन सह दिलीपस्य युद्धं भवति। दिलीपस्य श्रमो वृथा जायते **"अलं महीपाल! तव श्रमेण"** इति।

सनातनपरम्परायां सर्वेषामेव देवानां वाहनानि पशुपक्षिणो जायन्ते। एकस्मिन्नेव शिवपरिवारे परस्परविरोधिनः पशुपक्षिणः मूषिकः गणपतेः,

मयूर: कार्तिकेयस्य, वृषभ: शिवस्य, सिंह: पार्वत्याश्च वैरभावं विसृज्य तिष्ठन्ति। अनेन पौराणिका: कीदृशा: पर्यावरणसंरक्षणे दत्तचित्ता जागरुकाश्च आसन् तज्ज्ञातुं शक्यते।

## सन्दर्भ सूची

१. पुरुषसूक्तम् ऋग्वेदे १०/९०/८-१०
२. यजुर्वेद: ३६/१७
३. शु.य.वे १३/२७-२९, ३७/१३
४. अमरकोश: २/२-३
५. युजु. १८/२३
६. देवीभागवत. १/३/२
७. मत्स्य. २४/१-२
८. सुभाषितरत्नभाण्डागारम्, तृतीय प्रकरणम् श्लोक ३५-३६
९. सुभाषितरत्नभाण्डागारम्, तृतीय प्रकरणम् श्लोक ३७
१०. सुभाषितरत्नभाण्डागारम्, तृतीय प्रकरणम् श्लोक ३८, ४२
११. सुभाषितरत्नभाण्डागारम्, तृतीय प्रकरणम् श्लोक ५०
१२. सुभाषितरत्नभाण्डागारम्, तृतीय प्रकरणम् श्लोक ५१
१३. सुभाषितरत्नभाण्डागारम्, तृतीय प्रकरणम् श्लोक ५२
१४. भविष्य. १२८/१४
१५. सुभाषितरत्नभाण्डागारम् ३/११३
१६. सुभाषितरत्नभाण्डागारम् ३/११४
१७. भविष्य, मध्यमपर्व, पूर्वभागे ९/२३-२५
१८. सुभाषितरत्नभाण्डागारम् ३/४९६
१९. भविष्य. मध्यम. पूर्वभागे. १०/३३
२०. पद्म. सृष्टि. ६५/५
२१. विष्णु. धर्म. ३/१९७/१३
२२. पद्म पु. उत्तरखण्डम्
२३. सुभाषितरत्नभाण्डागारम् ३/१०४
२४. अग्नि. पु. ७०/५
२५. कूर्म पु. २/११/१४
२६. अथर्व.वे. ८/७/१२

*

# उपपुराणेषु बिन्दुसरः

वेदसंपोषकसम्बर्धकोपबृंहकरूपेण यथा महापुराणानां भूमिका वर्तते तथैवोपपुराणानां महिमा शास्त्रेषु प्रथते। महापुराणानां संख्यावदुपपुराणानां संख्या अष्टादश। परन्तु नामगणनाप्रसङ्गे कुत्रचिन् नामानि भिद्यन्ते। कूर्मपुराणे उपपुराणानां नामानीत्थं दर्शितानि सन्ति।

**आद्यं सनत्कुमारोक्तं नारसिंहमथापरम्।**
**तृतीयं स्कान्दमुद्दिष्टं कुमारेण च भाषितम्।।**

**चतुर्थं शिवधर्माख्यं साक्षान् नन्दीशभाषितम्।**
**दुर्वाससोक्तमाश्चर्यं नारदीयमतः परम्।।**

**कपिलं वामनं चैव तथैवोशनसेरितम्।**
**ब्रह्माण्डं वारुणं चाथ कालिकाह्वयमेव च।।**

**माहेश्वरं तथा साम्बं सौरं सर्वार्थसंचयम्।**
**पराशरोक्तमपरं मारीचं भास्कराह्वयम्[१]।।**

एकाम्रपुराणे उपपुराणानां नामानि किंचिद् भिन्नानि सन्ति। उत्कले रचितमेकाम्रपुराणमप्यत्र गीयते। तद् यथा—

**आद्यं बृहन्नारसिंहं बृहद्वैष्णवगारुडे।**
**बृहत् ततो नारदीयं नारदीयं प्रभासकम्।।**
**लीलावती पुराणं च तथा देवी च कालिका।**
**आखेटकं बृहन्नन्दि नन्दिकेश्वरमेव च।।**
**एकाम्रमेकपादं च लघुभागवतं तथा।**
**मृत्युञ्जयाङ्गिरसके साम्बमष्टादश स्मृताः[२]।।**

महापुराणोपपुराणौपपुराणान्यतिरिच्य संहितासाहित्यमपि पुराण-वाङ्मयस्य कलेवरं वर्धयति। एतेषूत्कलदेशमधिकृत्य कपिलसंहिताऽस्ति विरचिता यत्रोत्कले विराजितानि पुण्यक्षेत्राणि वर्णितानि। एतेषु पुराणेषु संहितासु च बिन्दुसरोऽधिकृत्य प्रमुखरूपेण कपिलपुराणमेकाम्रपुराणं कपिलसंहिता च वर्णयन्ति।

**बिन्दुसरस उत्पत्तिवर्णनम्**

कपिलपुराणानुसारेणास्मिन् सरसि भूतभावनशङ्करस्य चमत्कारेण विभिन्ननदनदीनां जलबिन्दवः बिन्दूरूपेण स्रवन्ति स्म। तस्मात्तेन बिन्दुसरः इति नाम प्रकीर्तितम्। तदाप्रभृति विभिन्नपुराणेषु बिन्दुसरोरूपेण इदं तीर्थं प्रथितमभूत्। तत्र बिन्दुद्भवे गङ्गा गोदावरीरेवातुङ्गभद्रानर्मदाकावेरीसरयू-तापीप्रभृतयो नद्यस्तथा मानसं पुष्करं पम्पा च पुष्करिण्यः स्वतः सुस्रुपुः। क्षारोधि-पयोधि-दधि-सर्पि-सुरार्णवानां जलमपि बिन्दुरूपेण स्रवति। द्वारवत्यां नैमिषे दण्डकारण्ये बदरिकाश्रमे च यानि तीर्थानि सन्ति तानि सर्वाणि बिन्दुसरसि प्रवहन्ति। चतुर्दशभुवनेषु एतादृशं तीर्थं नास्ति।

**सर्वे तत्र स्रवन्ति स्म जलबिन्दून्नहर्निशम्।**
**तस्माद् वेदे पुराणे च नाम्ना बिन्दुसरोवरः।**
**मानसं पुष्करं पम्पा सुतीक्ष्णं शैलनिर्मलम्।**
**स्रवन्त्येतानि सर्वाणि तीर्थे बिन्दुद्भवे द्विजाः[३]।।**

एकम्रपुराणमपि एतत् तथ्यं पुष्णाति। सर्वाः नद्यः सर्वे सागराः सर्वे च ह्रदाः एकाम्रकानने स्थिते बिन्दुसरसि स्रवन्ति। तद्यथा—

**सरांसि ह्रदकूपानि निर्झराः सागराः प्रपाः।**
**गङ्गाद्याः सरितः सर्वाः क्षीरोदाद्यर्णवस्तथा।।**
**स्रवन्ति यत्र वै सर्वे बिन्दुजा लवरूपिणः।**
**बिन्दुं स्रवन्ति विश्वस्य तेन बिन्दुसरः स्मृतम्[४]।।**

**बिन्दुसरसः चतुर्पार्श्वे विराजितानि देवायतानि**

अनन्तवासुदेवः स्वयं वासुदेवो वैकुण्ठं विहायात्र निवसति। नानाविधसुघटितरत्न-जटितकङ्कणाभ्यां सुशोभितः, कट्यां किङ्किण्या विभूषितः, अभिनवपल्लव-समानपादो, निद्राघूर्णितलोचनैः मुकुटैर्भ्राजमानः, इन्द्रनील इव श्यामलवर्णः, श्रीवत्साङ्कित-विग्रहः, दाडिमपुष्पसंकाशः अमृतदायकाधरः स वासुदेवः साक्षात्परब्रह्मरूपोऽस्ति। उक्तं च—

**साक्षाद् ब्रह्मस्वरूपोऽयं परं ब्रह्म उदाहृतः।**
**अद्वितीयोऽक्षयो नित्यो वासुदेवेति संज्ञकः[५]।।**

यो बिन्दुद्भवजले स्नात्वा वासुदेवदर्शनपूर्वकं तं जपति सः साक्षाद् वैकुण्ठं गच्छति।

**शङ्खचक्राङ्कितं भुजं विपिनैकाग्रसंस्थितम्।**
**कञ्जाक्षं पीतवसनं नीरदाभं हरिं भजे[६]।।**

इति मन्त्रं भक्तियुतेन चेतसा यो जपति तस्मै श्रीवासुदेवः मुक्तिं प्रयच्छति। सहस्रयोजनान्ते इमं मन्त्रं जपन् जनो मुक्तिमवाप्य शङ्खचक्रं सन् व्रजति। मन्त्रोऽयं मन्त्रराज इत्युच्यते।

**बिन्दुसरोवरे चन्दनयात्रा**

यथा नीलाचले देवदेवस्य चन्दनयात्रा नरेन्द्रपुष्करिण्यां भवति, तथैव श्रीलिङ्गराजस्य चन्दनयात्रा बिन्दुसरसि महता गौरवेण आयोज्यते। लिङ्गराजस्य उत्सवमूर्तिं विमाने संस्थाप्यार्चका बिन्दुसरं नीत्वा नानापुष्पसुसज्जितायां किङ्किणीरंजितायां मणिमुक्ताखचितायां नौकायां संस्थाप्य विहारं कारयन्ति यत्र भक्ता शिवभजनानि कुर्वन्त भगवन्तं शिवं तुष्यन्ति। जलक्रीडायामनन्तरं बिन्दुसरसः मध्यमागे विराजिते मण्डपे देवं संपूज्य पुनस्तं मुख्यमन्दिरं प्रति आनयन्ति। अस्मिन् मासि बिन्दुसरसि स्नात्वा य वासुदेवं प्रदक्षिणां कृत्वा तं पश्यति, शिवस्तं शिवसदनं नयति[७]।

**अन्यशिवायतनानि**

अस्मिन् स्थाने ब्रह्मेश्वरस्य लिङ्गं राराजते। अपरं च भास्करेशस्य, मेघेशस्य, गोकर्णेश्वरस्य, स्वर्णजलेश्वरस्य, स्वर्णकूटेश्वरस्य लिङ्गं विद्यते, तं विलोक्य समर्च्य च पापाद् विमुच्यते जनः। अत्र आम्रकेशः मध्यमेशश्च वर्तेते, ययोः दर्शनेन मनुष्यः काशीवासफलं लभते। दक्षिणे स्वप्नेश्वरलिङ्गं वर्तते, यत्र पितृभ्यः पिण्डदानं भवति, तस्मात् ते नरकाद् ब्रह्मलोकं व्रजन्ति। आश्विनमासस्यामावास्यां तिथौ योऽत्र पिण्डदानं करोति तस्य पितरः कल्पकोटिपर्यन्तं तुष्यन्ति। अस्य पश्चिमभागे कपिलेन पूजितः कामप्रदो देवोऽस्ति। अत्रैव सर्वतीर्थप्रदं कपिलकुण्डं वर्तते। अत्र स्वात्वा नरोऽक्षयं फलमश्नुते। अत्र उग्रेश्वरस्य लिङ्गमस्ति। तत्रैव नन्दीश्वरस्तथा भृकुटीशो वर्तेते यौ अवलोक्य मानवः शाश्वतं सुखमनुभवति। अस्मिन् पार्श्वे यमेश्वरस्य लिङ्गं वर्तते यमवलोक्य नरो यमदण्डात्तरति। अस्याग्रे

पापनाशकं तीर्थमस्ति, यत्र स्नात्वा पापानि दुरितानि च साक्षाद् विलयं गच्छन्ति। कलिकाले अष्टम्यां कृष्णपक्षे तत्र स्नात्वा पितृभ्यः पिण्डदानं क्रियते चेत् शिवलोकः प्राप्यते। एवं प्रकारेणानेकलिङ्गाभिपूरितं बिन्दुसरं शोभते। तस्मादुच्यते—

**अनेकानि च लिङ्गानि तत्र सन्ति द्विजोत्तमाः।**
**संख्यां कर्तुं न शक्नोति कोऽपि मानवपुङ्गवः[७]।।**

**उपसंहारः**

वेदोपबृंहकत्वेन यथा महापुराणानां महत्त्वं वरीवर्ति तथैवोपपुराणाम्। उपपुराणानि विशेषरूपेण एकमेव देवमेकमेव स्थलं वोद्दीश्य तस्य महिमानं वर्णयन्ति। उत्कलमधिकृत्य महापुराणेषु स्कन्दपुराणं पद्मपुराणं च विशेषरूपेण महत्त्वं भजेते। तथैवोपपुराणेषु कपिलमेकाम्रं च उत्कलस्य महनीयतां दर्शयतः। तत्रोत्कले एकाम्रक्षेत्रं प्रथितमस्ति यस्मिन् तीर्थराजरूपेण बिन्दुसरो विराजते। अस्मिन् सरसि सर्वं तीर्थजलं, सर्व नीरजलं, सर्वं समुद्रजलं, सर्वं ह्रदजलं बिन्दुरूपेण स्रवन्ति। तस्मात्काराणात् काशीं त्यक्त्वा शिवो लिङ्गराजरूपेण, विष्णुश्च वैकुण्ठं त्यक्त्वा वासुदेवरूपेणात्र राराजेते। वातावरणदृष्ट्याऽपीदं सरः महत्त्वं भजति। प्रतिमासमत्र स्नानस्य विशेषफलमस्ति। तस्मादेकाम्रपुराणे स्नानमन्त्रोऽपि विहितः —

**बिन्दुं बिन्दुं समाहृत्य निर्मितस्त्वं पिनाकिना।**
**वृजिनं हर मे सर्वं बिन्दुसागर ! ते नमः।।**

**सन्दर्भ-सूची**

१. कूर्मपुराणस्य पूर्वार्द्धे १/१७-२०।
२. एकाम्रपुराणम् १/२१-२३।
३. कपिलपुराणम् २/५,७।
४. एकाम्रपुराणम् २०/२४-२५।
५. कपिलपुराणम् १४/७।
६. कपिलपुराणम् १४/६४।
७. एकाम्रपुराणम् २२/५०।

*

# रघुवंशे पुराणालोकः

वैदिकवाङ्मयादनन्तरं लौकिकसाहित्ये रामायणमहाभारतयोः सुमहत्स्थानमायाति। वाल्मीकिव्यासौ जगतीतले कीर्तिमानं स्थापितवन्तौ, अधुनापि न केनापि कविना तत्स्थानं प्राप्तम्। तदनु पुराणसाहित्यस्य चर्चा जायते। किन्तु पुराणानां रचनाकाल इदानीमपि न निश्चितः। अस्तु आर्षकाव्ययोः रामायणमहाभारतयोः रचनायाः परं महाकविभासस्य त्रयोदशनाटकचक्रमभूतपूर्वमानन्दं वितनोति। महाकविकालिदासेन भाससौमिल्लकविपुत्रादीनां चर्चा यद्यपि कृता, तथापि भासं विहाय न कस्यापि लेखकस्य कृतिरुपलब्धाऽस्ति।

इदमपि निश्चप्रचं वक्तुं शक्यते यद् वाल्मीकिव्यासौ काव्यरचनायां लब्धयशसौ। भासस्तु केवलं नाट्यविधायाम् । किन्तु कालिदासो यथा काव्ये तथा नाट्ये प्रभविष्णुरस्ति। माधुर्यगुणस्य विनिवेशः, प्रसादस्य स्निग्धता, रसपेशलता, अलङ्काराणां मञ्जुलप्रयोगः, वैदर्भीरीतेश्चमत्कारिसन्निवेशश्च कालिदासभारत्याः विशेषता। अत एव स्तुतिपरकैः शब्दैरसौ कविः कविताकामिनीविलासः, अनामिकाधिष्ठितः कविताकामिनीकान्तः इति विरुदैः स्तूयते।

कालिदासविरचिताः नैकाः कृतय उपलभ्यन्ते। परन्तु कालिदाससमालोचकास्तस्य सप्तकृतीः स्वीकुर्वन्ति। तेषु नाटकानां क्रमोऽस्ति— १. मालविकाग्निमित्रम्, २. विक्रमोर्वशीयम्, ३. अभिज्ञानशाकुन्तलम्। काव्यानां क्रम इत्थम्भूतो विद्यते। १. ऋतुसंहारम्, २. कुमारसम्भवम्, ३. मेघदूतम्, ४. रघुवंशम्।

एतत्सर्वसंवादि मतं यद् या रचनाऽन्तिमा तत्र गुणवत्ता रसपेशलता चाधिका दृश्यते। काव्येषु रघुवंशमहाकाव्यं चरमं श्रेष्ठं चास्ति। अस्य काव्यस्योपरि चत्वारिंशत् टीकाः सन्ति। प्रथमश्लोक उपन्यस्तवागर्थयोः सम्पर्को बहुव्याख्यासापेक्षः । रामायणस्य कथावस्तु स्रोतःरूपेण मनसि संस्थाप्य भासस्य काव्यकलां हृदि निधाय दिलीपस्य गोसेवातः एवं प्रकृतकथा तेन प्रारब्धा। प्रथमसर्गे पूर्वपीठिकारूपेण रघुजन्मवृत्तान्तः, द्वितीये सुदक्षिणागर्भाधानं, तृतीये रघोः राज्याभिषेकः, चतुर्थे तस्य दिग्विजयः,

विश्वजिद् यज्ञानुष्ठानं, पञ्चमे इन्दुमत्याः स्वयंवरायाजस्य गमनं, षष्ठेन्दुमत्याः स्वयंवरः, सप्तमे अजविवाहः, अष्ठमे इन्दुमत्याः वियोगेन अजविलापः, नवमे मुनिशापप्रदानं, दशमे भगवदवतारः, एकादशे सीतारामविवाहवर्णनं, द्वादशे रावणवधः, त्रयोदशे अयोध्याप्रत्यागमनं चतुर्दशे सीतादेव्याः परित्यागः, पञ्चदशे रामस्य स्वर्गारोहणं, षोडशे कुशकुमुद्वतीपरिणयः, सप्तदशे राज्ञः अतिथेर्वर्णनं, अष्टादशे वंशानुक्रमः, अन्तिमे चैकोनविंशे गर्गाभिषेकः नित्यनूत्नशैल्या वर्णिताः।

यद्यपि रघुवंशमहाकाव्यस्य मूल्यकथास्रोत रामायणमस्ति परन्तु-कथावस्तुनि पुराणानां प्रसङ्गसमागमो निश्चप्रचं हृदयावर्जको भवति। अस्मिन् शोधनिबन्धे रघुवंशे पुराणानामालोकः कथं प्रतिफलितोऽर्थात् पुराणालोकैः रघुवंशो नितरामालोकित इत्याम्रेडितुं यत्नो विधीयते।

वेदेषूपनिषत्सु पुराणेषु च यज्ञस्य महत्त्वं वरीवर्ति। यज्ञस्य महत्त्वं कालिदासो दृढस्वरेणाङ्गीकरोति। यथाविधि-यज्ञसम्पादनेन वृष्टिर्भवति, नियमितवृष्ट्या सस्यानि जायन्ते। लोकस्योपकारो भवति। अत एव यज्ञः करणीयः।

**हविरावर्जितं होतस्त्वया विधिवदग्निषु।**
**वृष्टिर्भवति शस्यानामवग्रहविशोषिणाम्।।** (रघु. १.६२)

देवमानवयोः सुसम्पर्कद्वारैव पृथिवी प्रचलति। पृथिव्याः सुमनोहरवस्तुभिर्मानवो यज्ञसम्पादनं करोति। देवराजस्तद्विनिमयेन सस्योत्पादनार्थं पुष्कलां वृष्टिं प्रयच्छति। यथा—

**दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।**
**सम्पद्विनिमयेनोभौ दधतुर्भुवनद्वयम्।।** (रघु. १.२६)

यज्ञपूतजलेनालौकिकपदार्थानां सिद्धिर्जायते। रघुर्यज्ञे सर्वस्वं दक्षिणारूपेण प्रयच्छति। तदनन्तरं कौत्सस्य याच्ञां पूरयितुं तस्य किमपि न भवति। अतः वसिष्ठदत्तमन्त्रपूतजलेनाभिषिक्तेन रथेन आकाशमार्गे गत्वा धनाधिपतिं कुबेरमाक्रमितुमिच्छति[1]।

---

१. रघु. ५.२७;

पुत्रार्थेऽपि सूर्यवंशीयराजानः यज्ञसम्पादनं बहु मन्यन्ते। दशरथः पुत्रप्राप्त्यर्थमृष्यशृङ्गादीनां मुनीनां सहायतया पुत्रेष्टिं चकार[1]। दिलीपोऽपि चक्रवर्तित्वं प्राप्त्यर्थमेकोनशतमश्वमेधं कृतवान्[2]।

गुरुदक्षिणाप्रदानार्थं कौत्सः रघुं प्रत्यागच्छति। यज्ञसम्पादनेन तदानीं राजकोषो रिक्तमासीत्। यदा रघुर्धनार्थं कुबेरालयं गच्छति, तदानीं कोषागारे धनस्य वृष्टिर्भवति। निर्लोभस्तु कौत्सो यदपेक्षितं तदेव स्वीकरोति नाधिकम्। पुराणेषु एकलव्यस्य कर्णस्य च गुरुदक्षिणाकथा पुष्कलेन वर्णिताऽस्ति। रघुवंशिराजानां तपश्चर्याविषये कालिदासलेखनी न शिथिला भवति। दिलीपस्य गोसेवा, सिंहाय स्वजीवनसमर्पणं तप एव भवति। पितृसत्यं पालयित्वा रामचन्द्रस्य वनगमनं किं न तपः? सीतायाः वाल्मीक्याश्रमे निवासः किं न तपः?

त्याग-तपस्या-तपोवनानि कालिदाससाहित्यस्य विजयवैजयन्तीं सूचयन्ति। एतानि पुष्कलवर्णनानि कालिदासस्य हृदये पुराणसाहित्य-संस्कारभूतानि चित्राणि।

वेदे देवराज इन्द्र एकचतुर्थांशमन्त्रैः स्तुतो वर्तते। वेदानुसारणेन्द्रस्य व्युत्पत्तिरतीव दुर्बोध्या। शतपथब्राह्मणे इन्धधातोरिन्द्रस्योत्पत्तिरभिहिता[3]। निरुक्तकारेण यास्केनेन्द्रस्य नानाविधव्युत्पत्तिः कृता[4]। इन्द्रो वास्तविकरूपेण शक्तिद्योतकः।

अयं देवाधिराज इन्द्रो यथा वेदेषु पुराणेषु बहुभिर्मन्त्रैः श्लौकेश्च वर्णितस्तथैव कालिदाससाहित्ये विपुलतयाऽस्य प्रसङ्ग आयाति। इन्द्रः स्वरथं सारथिना सह रामाय प्रयच्छति रावणेन सह युद्धसमये। कृष्णावतारे भगवता इन्द्राद् वृष्टिर्नियमितः। पुराणस्यायं प्रसङ्ग रघुवंशे उपबृंहितः[5]। इन्द्रवाहन ऐरावतोऽपि रघुवंशे वर्णितः[6]।

---

१. ऋष्यशृङ्गादयस्तस्य सन्तः सन्तानकाङ्क्षिणः।
आरेभिरे जितात्मानः पुत्रीयामिष्टिमृत्विजः॥ (रघु. १०.४)

२. रघु. १३.२०

३. इन्धो ह वै नामेष-तं वै एतमिन्धं सन्तं इन्द्र इत्याचक्षते। (श.ब्रा. १४.६.१०)

४. निरुक्तम् १०.५

५. रघु. १७.८

६. रघु. १७.८

कपिलवृत्तान्तो रघुवंशे बहुषु स्थानेषु आगच्छति। इयं घटना त्वेवंविधा वर्तते। इन्द्रः सर्वेभ्यो यज्ञकर्तृभ्यो बिभेति। यः खलु कठोरतपश्चरणं करोति, इन्द्रस्तेभ्यो द्रुह्यति। यतो हि तपःशक्त्या एवेन्द्र इति पदमधिगम्यते। तथैवेन्द्रः सगरस्य यज्ञकर्मणो बिभेति स्म। अतः केनापि प्रकारेण तस्य यज्ञकर्मणि विघ्नं जनयति। अयोध्यानरेशबाहुकस्य पुत्रः सगरः। अस्य नामकरणस्य इयं कथा श्रूयते। यदा बाहुकस्य पत्नी गर्भवत्यासीत्, तदानीं सपत्नीजनैरीर्ष्यया तस्या भोजने विषं (गरं) प्रदत्तम्। यदा सा पुत्रमजनयत् तदानीं शरीरं विषावृत्तं (गरावृत्तं वा) बभूव। बालस्तु न मृतः । अतः गरेण सह जात इति पित्रा तस्य नाम सगर इति कृतम्। पितुरनन्तरं सगरोऽयोध्यां शशास। तस्य द्वे पत्न्यावास्ताम्। सुमतिः केशिनी च। षष्टिसहस्रपुत्राणां विषयेऽपि कथेयं वर्तते। सुमतिः शतं वर्षाणि यावद् गर्भं धृतवती । ततः परं सा केवलं मांसखण्डमेकं प्रसूतवती। शिवकृपया तन्मांसपिण्डः षष्टिसहस्रखण्डेषु विभक्तः। एकमेकं खण्डमेक एकः पुत्रः जातः।

एकदा सगरोऽश्वमेधयज्ञमायोजितवान्। निर्विघ्नं यज्ञकार्यं समाप्तम्। यदा यज्ञाश्वो देशाटनं कर्तुं प्रस्थितस्तदानीमिन्द्रोऽचिन्तयत्, यदि सगरस्य यज्ञकार्यं निर्विघ्नं समाप्तिमेष्यति, तर्हि स इन्द्रपदमधिगमिष्यतीति। अतः स यज्ञाश्वं तिरोधाय पाताले कपिलमुनेः समीपेऽस्थापयत्। तत्राश्वमवलोक्य 'एष वाजिहर' इति मत्वा तमताडयन्। तस्य कपिलस्य शापेन सर्व एव सगरपुत्रा भस्मीभूताः। अनन्तरं भगीरथस्य प्रयत्नेनैतैः सर्वैर्मुक्तिरधिगता।

सगरस्य कुले रघुवंशनायका रघ्वादयः समुत्पन्नाः। सगरपुत्रैः रसातलं प्रति यज्ञाश्वापहरणं प्रसङ्गं कालिदासोऽपि भृशं स्मरति[१]।

रामायणे रामरावणयोर्युद्धसमये इन्द्रः रामचन्द्राय स्वरथमर्पयति। तथैव रघुवंशे उपबृंहितं वर्तते।

**रामं पदातिमालोक्य लङ्केशं च वरूथिनम्।**
**हरियुग्मं रथं तस्मै प्रजिघाय पुरन्दरः।।** (रघु. १२.८४)

---

१. गुरोर्यियक्षोः कपिलेन मेध्ये रसातलं सङ्क्रमिते तुरङ्गे। (रघु. १३.३)

रामायणे प्रसङ्गोऽयं विस्तरेण वर्तते। तद्यथा—भूपृष्ठे यानि युद्धान्यभवन् तानि सर्वाणि देवानां हितायैव। रामरावणयोर्युद्धमपि सन्तप्तानां देवानां मङ्गलायाभूत्। रावणो रथमारुह्य युद्धमकरोत्। परन्तु मर्यादापुरुषोत्तमो रामो भूमौ दण्डायमानः सन् तेन सह युद्धं कृतवान्। एतत्त्वसमीचीनमिति मत्वा देवराज इन्द्रः स्वसारथिं मातलिं रथेन साकं रामचन्द्रस्य सहायतार्थं प्रेषयति[१]। बालारुणकान्तियुते किङ्किणीशतभूषिते इन्द्ररथे उपविश्य रामो रावणस्य समक्षमागतः। अन्ते रावणः हतः।

रामायणस्याहल्योद्धारप्रसङ्गो रघुवंशस्यैकादशसर्गे आयाति। रामचन्द्रस्य पादरजःस्पर्शेन पाषाणमयी गौतमपत्न्यहल्या मानवी सञ्जाता। यथा—

**प्रत्यपद्यत चिराय यत् पुनश्चारु गौतमवधूः शिलामयी।**
**स्वं वपुः स किल किल्बिषच्छिदां रामपादरजसामनुग्रहः।।**

(रघु. ११.३४)

मत्स्यपुराणानुसारेण गौतमवध्वूद्धारस्थानं महत्तीर्थं जातम्। वेदेभ्यो विभिन्नपुराणेभ्यो रामायणाच्चेयं कथाऽत्र सङ्ग्रहेण स्वीकृता। यथा—

(क) अहल्याया ह मैत्रेय्या (इन्द्रः)। जार आस। (२६.१.१)

(ख) इन्द्रो मायाभिः पुरुरूप ईयते। (ऋग्वेदः ९.४७.८)

(ग) अहल्यायै जारेति। (श.ब्रा. ३.३.४.१८)

(घ) सहस्राक्षमतिपश्यं पुरस्तात्। (अथर्व. ११.२.१७)

पुराणानुसारेणाहल्याप्रसङ्ग एवमस्ति यदेकस्मिन् दिने गौतमः शीघ्रं तपश्चरणाय कैलासं प्रस्थितः। इन्द्रो गौतमपत्न्यहल्यायाः सौन्दर्येण विमुग्धः सन् छद्मना गौतमवेषं धृत्वा तया सह सम्बन्धं कृतवान्। यदा गौतमः प्रत्यागतस्तदानीमहल्यां नग्नामवलोक्य प्रस्तरो भवेतीन्द्रस्य शरीर च

---

१. ततो देववरः श्रीमाञ् श्रुत्वा तेषां वचोऽमृतम्।
आहूय मातलिं शक्रो वचनं चेदमब्रवीत्।।
रथेन मम भूयिष्ठं शीघ्रं याहि रघूत्तमम्।
मातले भूतलं यातः कुरु देवहितं महत्।। (रामायणम् ६.१०३.६-७)

सहस्रभगचिह्नानि भवन्त्विति तमशपत्[१]। पत्न्या दोषो नास्तीति ज्ञात्वा पुनस्तेन तस्या उद्धारोपायोऽप्युक्तः। त्रेतायुगे रामपादरजःस्पर्शे सति पूर्ववद् भविष्यसि।

रघुवंशे गीताया उपदेशा दरीदृश्यन्ते। गीतायामर्जुनः भगवतः विश्वरूपं दृष्ट्वा सम्यक्तया तद्रूपं धारयितुं न शक्नोति। तथैव रघुवंशे त्रयोदशसर्गे समुद्रवर्णनप्रसङ्गे विष्णुस्वरूपं चित्रितम्। यथा—

**तां तामवस्थां प्रतिपद्यमानं**
**स्थितं दश व्याप्य दिशो महिम्ना।**
**विष्णोरिवास्यानवधारणीय-**
**मीदृक्तया रूपमियत्तया वा।।** (रघु. १३.५)

गीतायामिदं वर्णितमस्ति यदाऽधर्मस्याभ्युदयो भवति, धर्मस्य क्षयो भवति, तदानीं भगवान् साधूनां परित्राणार्थमात्मानमवतारयति। तथैव कालिदासो रामचन्द्रस्यावतारग्रहणविषये कथयति। यथा—

**अनवाप्तमवाप्तव्यं न ते किञ्चन विद्यते।**
**लोकानुग्रह एवैको हेतुस्ते जन्मकर्मणोः।।** (रघु. १०.३१)

इयं धारणा सामान्यपरिवर्तनपूर्वकं गीतायां वर्तते—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि।।** (गीता. ३.२२)

गीतायां निष्कामकर्मयोगस्य महिमा वर्तते। कर्मफलस्य त्याग इति। सर्वमीश्वरायार्पणमिति कर्मयोगस्य सारांशः। गीतायां यथा—

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।** (गीता.२.४७)

एवं प्रकारेण न केवलं रघुवंशेऽपि तु समस्तकालिदाससाहित्येऽपि गीतायाः प्रभावः प्रकर्षेण दृश्यते। **'जातस्य हि ध्रुवो मृत्युरिति'** गीतोपदेशो रघुवंशे स्फुटतया वर्तते। यथा—

---

१. सहस्रभगसम्प्राप्तिर्दुःखं चैव शचीपतेः । (देवीभागवतम् १.५.४६)

**मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैः।**
**क्षणमप्यवतिष्ठते श्वसन् यदि जन्तुर्ननु लाभवानसौ।।**

(रघु. ८.८७)

कालिदासः शिवभक्त इति निश्चप्रचं वक्तुं शक्यते। यतो हि प्रायः सर्वास्वपि कृतिषु मङ्गलाचरणे नान्द्यां वा शिवपरकस्तुतयो वर्तन्ते। अभिज्ञानशाकुन्तले शिवस्य सर्वव्यापकत्वं प्रकाश्य स अष्टमूर्तिं शिवं स्तौति। तथैव रघुवंशे वागर्थयोः प्रतिपत्तयेऽर्धनारीश्वररूपौ पार्वतीपरमेश्वरौ प्रणमति।

**वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।**
**जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।** (रघु. १.१)

एतादृशी धारणा शिवपुराणादिषु पुष्कलतया पल्लविता वर्तते। कालिदासस्य हृदयं सर्वव्यापकम्। स शैवो भूत्वाऽपि विष्णुब्रह्मणोऽपि पर्याप्तां स्तुतिं करोति। सर्वे आस्तिका भारतीया मोक्षमिच्छन्ति। कविः कथं मोक्षमिच्छति—

**ममापि च क्षपयतु नीललोहितः।**
**पुनर्भवं परिगतशक्तिरात्मभूः।।** (अभि. ७.३५)

यदा पृथिव्यां पापस्य भारोऽधिको भवति, धर्मस्य हानिरुपजायते, दुर्जनानां च दौरात्म्यं वर्द्धते, सज्जनाः कष्टमनुभवन्ति, तदानीं भगवान् धरातल आत्मानमवतारयति। गीतायामस्यादर्शो वर्णितः।

**परित्राणाय साधूनां विनाशाय च दुष्कृताम्।**
**धर्मसंस्थापनार्थाय सम्भवामि युगे युगे।।** (गीता ४.८)

रघुवंशे रामचन्द्रस्यावतारस्तथैव भवति। रावणकुम्भकर्णप्रभृतयः राक्षसास्तेषामनुचराश्च ऋषीणां यज्ञकर्मणि विघ्नमुत्पादयन्ति। रावणः सीतामपहृत्य जघन्यपापमाचरति। विश्वामित्रर्षेरनुरोधेन रामचन्द्रः ताडका-सुबाहुप्रभृतीन् मारयित्वाऽन्ते रावणं व्यापाद्य विभीषणप्रभृतिसज्जनानां रक्षां करोति। कालिदासः रामचन्द्रस्यावतारमित्थं प्रस्तौति।

**सोऽहं दाशरथिर्भूत्वा रणभूमेर्बलिक्षयम्।**
**करिष्यामि शरैस्तीक्ष्णैस्तच्छिरः कमलोच्चयम्।।**

(रघु. १०.४४)

पुराणवर्णितं नहुषचरित्रं रघुवंशत्रयोदशसर्गे स्तोकेन सूचितमस्ति—

**भ्रूभेदमात्रेण पदान्मघोनः प्रभ्रंशयां यो नहुषं चकार।**
**तस्याविलाम्भः परिशुद्धिहेतोर्भौमो मुनेः स्थानपरिग्रहोऽयम्।।**

(रघु. १३.३६)

पुरूरवसः पुत्रेण आयुना सह इन्दुमत्याः पाणिग्रहणमभवत्। एतयोर्दम्पत्योः पुत्रो नहुषः। अयं चन्द्रवंशोत्पन्नश्चातिवीर्यवानासीत्। असौ स्वपराक्रमेणेन्द्रत्वमधिगतवान्। अस्य वर्णनं बारं बारं महाभारतस्य विभिन्नेषु पर्वस्वागच्छति। वृत्रवधादिन्द्रो ब्रह्महत्यादोषेण निपातितः सन् मानसरोवर आत्मनं जुगोप। तत्फलेन निखिलेषु लोकेषु वृष्ट्यभावाद् दुर्भिक्षमभवत्। तदानीं देवा राज्ञो नहुषस्य शक्तिं सामर्थ्यं चानुभूय तस्मै इन्द्रपदमयच्छन्। देवराजपदमधिगत्य भोगविलासेषु नहुषः प्रमत्तोऽभवत्। लोकहितकरं देवहितकरं च कार्यं त्यक्त्वा विपथगाम्यभूत्। एकस्मिन् दिने तेनेन्द्राणी दृष्टा। तामुपभोक्तुं चेयेष। अस्मिन् पापकर्मणि देवैः सः प्रतिरुद्धः। परन्तु युक्तिपूर्वकं स आह मयेन्द्राणी निश्चितमेव भोक्तव्या। इन्द्रस्याधिकारत्वेन सा मे पत्नी भवेत्[1]। नहुषाद् भीता सन्तीन्द्राणी बृहस्पतेः शरणमगात्। बृहस्पतिनापीन्द्रेण साकमिन्द्राण्याः पुनः सम्बन्धं कारयितुं यतिष्य इत्युक्त्वा नहुषान्न भेतव्यमित्युक्तम्[2]। अनुदिनं नहुषस्य पापकार्यमवलोक्य ऋषयः

---

१. सम्प्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया।
स तां सन्दृश्य दुष्टात्मा प्राह सर्वान् सभासदः।।
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति।
अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः।। (महा. उद्योग ११.१७-८)

२. न भेतव्यं च नहुषात् सत्यमेतद् ब्रवीमि ते।
समानयिष्ये शक्रेण न चिराद् भवतीमहम्।।
अथ शुश्राव नहुषः शक्राणीं शरणं गताम्।
बृहस्पतेरङ्गिरसे चुक्रोध स नृपस्तदा।। (महा. उद्योग ११.२५-२६)

कोपाविष्टा जाताः। देवैरपि नहुषः प्रतिबोधितो यत्परस्त्रीहरणं पापाय भवति। तेन तु ऋषिवाक्यं खण्डीकृत्य प्रत्युत्तरितमिन्द्रेणाहल्या धर्षिता। तत्र तस्य न कश्चिद् दोषः। तथैव इन्द्राण्या उपभागे मम कथं दोषमापद्येत[1]। इन्द्राणीं तस्मै समर्पयितुं कल्पयन्तः देवाः बृहस्पतेः पुरत आगताः।

शरणागतामिन्द्राणीं कथं वा विसृजेत् तु देवहिताय किमपि करणीयमिति विचिन्त्य तामनुकूलयितुं कञ्चित् समयं याचयामास। अस्मिन् याचिते समयेऽन्येऽपि विघ्ना भवेयुः। अनेन इन्द्राण्या देवानामपि भद्रं भविष्यति। अन्यथा देववरेण बलीयान् नहुषः किमपि वा कुर्यात्। नहुषस्य शीघ्रं मृत्युर्भविष्यति, इन्द्रः पुनः स्वसाम्राज्यं प्राप्स्यतीति प्रतिबोधयन्तो देवाः कथमपीन्द्राणीं नहुषं प्रति आकृष्टां चक्रुः। शची देवानां परामर्शेन नहुषस्य पुरतः एवमवादीत् यत्सा स्वपत्युर्योगक्षेममवेक्ष्य तत्परमेव तस्या भार्या भविष्यति। शची स्वपत्युरभिशप्तस्येन्द्रस्य समीपं गत्वा स्वदुःखं प्रकटीचकार। स्वपत्युरुपदेशक्रमेण तया नहुषस्य पुरत एवं भणितं यन् नहुषः पुरुषोढरथमारुह्य तस्याः सविधमागमिष्यति। तं रथमृषय स्वस्कन्धे वाहयित्वाऽऽनयिष्यन्तीति। ततः प्रभृत्यगस्त्यप्रभृतयः ऋषयस्तं शचीपुरं नयन्त्यानयन्ति स्म। एकदा नहुषः शीघ्रतया शचीगृहं प्राप्तुमिच्छति स्म। तदानीं नहुषेणोक्तं सर्प (गच्छ) सर्पेति। पदाघातोऽपि कृतः। अतीव क्लेशं प्राप्तवता मुनिनाऽगस्त्येनोक्तं यत्त्वं सर्पो भवेति। ततो नहुषो महासर्पो भूत्वाऽगस्त्यशापेन हिमालय एकस्मिन्नरण्ये निपतितः। सहस्रं वर्षाणि यावद् हिमालयोपत्यकायां भ्रमन् मुक्तिमवाप। इन्द्रोऽपि स्वपदमधिगतवान्।

वेदादारभ्य पुराणवाङ्मयं यावत् पर्वतानां प्राक् पक्षा आसन्निति किंवदन्ती वर्णिता। कथेयमेवमस्ति यत् पुरा पर्वता एकस्मात् स्थानादन्यस्थानं प्रति स्वेच्छया गच्छन्त्यागच्छन्ति स्म। पर्वताः साधारणतः दीर्घकायास्तेषामेतादृशगतागतेन देवानां च महती क्षतिरभूत्। बहवः प्राणिनो वृक्षसम्पदश्च म्रियन्ते स्म। ततो देवानामनुरोधेन देवराडिन्द्र स्वकुलिशेन पर्वतानां पक्षान् चिच्छेद।

---

१. अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी।
जीवतो भर्तुरिन्द्रेण स किं न निवारितः।। (महा. उद्योग १२.६)

रघुवंशे बहुस्थानेष्वपि कविना कथाया अस्याः पुष्टिः कृता। तद्यथा—

**स पूर्वतः पर्वतपक्षशातनं ददर्श देवं नरदेवसम्भवः।**
**पुनः पुनः सूतनिषिद्धचापलं हरन्तमश्वं रथरश्मिसंयतम्।।**

इन्द्रः पर्वतानां पक्षच्छेदनं कृत्वा 'पक्षच्छिद्' नाम प्राप्तवान्[१]। गोत्रभित्पदेनापि स ज्ञायते[२]।

कविकालिदासस्य शब्दाः, वाक्यानि, अभिप्रायाः, कविकर्मप्रतिभा, वक्तव्यवस्तु च ऋतुसंहारादारभ्य रघुवंशं यावद् यद्यपि समभावेन वर्तन्ते तथाप्यालोचकानां मतेन कविना प्रदर्शितः कश्चन पक्षपातः रघुवंशस्य कृते। वैदिकवाङ्मयादारभ्य पुराणसाहित्यं यावत् प्रसङ्गानुसारेण सर्व एव प्रासङ्गिकविषया रघुवंशे प्रायशो दृश्यन्ते। रघुवंशमहाकाव्यं भारतीयसांस्कृतिकपरिचायकरूपेण सर्वकालजयी।

कालिदासस्य जन्म भारते यत्र कुत्रापि भवेत्परन्तु निश्चप्रचमित्थं वक्तुं शक्यते यत्स सम्पूर्णमपि भारतं सम्यग् विजानाति। विजानाति चास्य वैदिकीं परम्परां पौराणिकीं च सम्पदां, यां खलु स्वग्रन्थेषु तेन क्रोडीकृत्यास्माकं कृते संस्थापिता। सर्वो लोकस्तस्याधमर्ण इति नास्ति सन्देहलेशः।

*

---

१. पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः। (रघु. १३.७)
२. उपेयुषः स्वामपि मूर्तिमग्रयामर्धासनं गोत्रभिदोऽधितष्ठौ। (रघु. ६.७३)

# प्रतिनायकः शिशुपालः

**उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।।**

'शिशुपालवधम्' इति एकमात्रं काव्यं विरच्य अमरः सञ्जातः महाकविः माघः। एतत्काव्यं माघकाव्यमिति ख्यातं **'मेघे माघे गतं वयः'** इत्युक्तिं पुष्णाति। रैवतकपर्वतवर्णनप्रसङ्गे घण्टामाघनाम्ना प्रसिद्धोऽयं कविः गुर्जरराज्ञः श्रीवर्मलातस्य प्रधानमन्त्रिण सुप्रभदेवस्य पौत्रः दत्तकस्य पुत्रः[1] अर्थगौरवस्य प्रमाणीभूतं पूर्वसुरिं भारविं स्वादर्शरूपेण स्वीकरोति। तद् विरचितं 'किरातार्जुनीयम्' मनसि निधाय स्वकीयमभिनवकाव्यं शिशुपालवधं २० सर्गेषु प्रस्तौति। **'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च प्रवक्तारो भवन्ति'** इति लक्षणानुसारं काव्यस्य प्रारम्भे **'श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि, वसन् ददर्शावतरन्तमम्बराद् हिरण्यगर्भाङ्गभुवं मुनिं हरिः[2]'** इति श्लोकेन करोति। आशीर्वादात्मक–नमस्कारात्मक–वस्तुनिर्देशात्मको वा नान्दीश्लोकः भवति[3] इत्यत्र 'श्री' शब्दः मङ्गलार्थे 'श्रियः पतिः' नायकस्य 'शासितुं जगत्' च विषयवस्तुनः सूचनार्थे प्रयुक्ताः सन्ति। वैकुण्ठे नियुक्तौ जयविजयौ द्वारपालकौ **'स्वधर्मे निधनं श्रेयः[4]'** इति कृत्वा स्वकर्मणि व्यापृक्तौ सनत्कुमारैः अभिशप्तौ पृथिव्यां जन्म नीत्वा सत्ययुगे हिरण्याक्ष–हिरण्यकशिपू, त्रेतायुगे रावण–कुम्भकर्णौ, द्वापरे च शिशुपाल–दन्तवक्त्रौ नाम्ना वर्णितौ स्तः शास्त्रेषु[5]। धीरोदात्तगुणयुक्तं[6] महाकाव्यस्य नायकं

---

१. (i) भोजप्रबन्धः। डॉ. कालहार्न–राजपुताना, वसन्तगढ शिलालेखः।
(ii) इति श्रीभिन्नमालववास्तव्यदत्तकसूनोर्महावैयाकरणस्य माघस्य कृतौ शिशुपालवधे महाकाव्ये.....।

२. शिशु–१.१

३. सा.द.–६.२४

४. भ.गीता–३.३५

५. सभापर्व–३३.४५, पद्मपु.–२५२, विष्णुपु.–चतुर्थांश, १४, अग्निपु. ४.१२

६. सा.द.–३.३२

**'परित्राणाय साधूनां विनाशाय च दुष्कृतां**[१]' नीतिं गृह्णन्तं श्रीकृष्णं जगतः सर्वकालिकहितचिन्तकः नारदः **बलावलेपादधुनापि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा। सतीव योषित् प्रकृतिः सुनिश्चिता पुमांसमन्वेति भवान्तरेष्वपि**[२] इति हेतोः **शुभेतराचारविपक्त्रिमापदो निपातनीया हि सतामसाधवः**[३] इति कथयन् पीडाकारकं शिशुपालं हन्तुं प्रचोदयति, यद् ओमिति उच्चार्य अङ्गीकरोति भगवान्।

हस्तिनापुरस्य राज्ञः अग्रजस्य युधिष्ठिरस्य राजसूययज्ञे सम्मिलितुमुद्यतः, धरावतरणस्य कारणं स्मारितः **कार्यद्वयाकुलः** श्रीकृष्णः कर्तव्याकर्तव्यविषये ज्येष्ठेन बलरामेण उद्धवेन च साकं विमर्शं करोति। यतो हि तान् विनाऽपि भ्रातृभिः तपसः सुतः धर्मराजः यज्ञं कर्तुं समर्थः। अपरपक्षे शिशुपालः न केवलं तं भगवन्तमपि तु लोकान् पीडयित्वा अधिकं दुःखं ददाति। अतः **उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता। समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च**[४] इति नीत्यनुसारं शिशुपालः प्रथमतः हातव्यः इति स्वमतमुपस्थाप्य तौ अवसरप्रदानाय विरतो भवति। यस्य **यद्वासुदेवेनादीनमनादीनवमीरितम्। वचसस्तस्य सपदि क्रिया केवलमुत्तरम्**[५] इति उक्त्वा ज्येष्ठभ्राता बलरामः समर्थयति। ततः परं बृहतां पत्युः शिष्यः उद्धवः शिशुपालः अवश्यमेव हातव्यः। यतो हि **कृतापचारोऽपि परैरनाविष्कृतविक्रियः। असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा**[६] इति कारणं ददाति। परन्तु ततः पूर्वं सुहृदां ज्ञानस्य आवश्यकता **चिरादपि बलात्कारी बलिनः सिद्धयेऽरिषु। छन्दानुवृत्तिदुःसाध्याः सुहृदो विमनीकृता**[७] इत्यस्ति। अस्मिन् कर्मणि **बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः। चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः** इति दूतसहायतायाः आवश्यकताऽस्ति। अन्यथा **उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः। हन्ति नोपशयस्थोऽपि शयालुर्मृगयुर्मृगान्**[८] इति

---

१. भ.गीता–४.८
२. शिशु.–१.७२
३. शिशु.–१.७३
४. शिशु.–२.१०
५. शिशु.–२.२२
६. शिशु.–२.८६
७. शिशु.–२.१०५
८. शिशु.–२.८०

कार्यसिद्धिः न भवति। अपरं च **अनुत्सूत्र-पदन्यासा सद्वृत्तिः सन्निबन्धना। शब्दविद्येव नो भाति राजनीतिरपस्पशा**[१]। एवं बहुशः उद्धवः प्रथमतः स्वीकृतस्य कार्यस्य सम्पादनार्थं यज्ञभूमिं प्रति गमनाय प्रेरयति। तत्र युद्धविषये अनुसन्धातुं प्रचोदयति, यद् भगवान् श्रीकृष्णः स्वीकरोति। रामरावणयोः युद्धविषये कथितमस्ति—

**गगनं गगनाकारं सागरः सागरोपमः।**
**रामरावणयोर्युद्धं रामरावणयोरिव।।**

त्रेतायुगे अवतीर्णयोः रामरावणयोर्युद्धस्य तुलना भवितुं नार्हति। द्वापरयुगे कृष्णावतारे अस्य काव्यस्य प्रतिनायकः कीदृश आसीत् यं प्रत्यक्षयुद्धे भगवान् हतवान्निति मनसि आगच्छति। यतो हि शृङ्गार-बीभत्स-रौद्र-हास्यरसैः युक्तस्य वीराङ्गीरसस्यास्य काव्यस्य शिशुपालस्य वधमधिकृत्य कृतं महाकाव्यं शिशुपालवधमिति[२] (अधिकृत्य कृते ग्रन्थे) नामकरणमस्ति, यत् प्रधानवस्तु सूचयति। साधारणतः प्रतिनायकः धीरोद्धतगुणयुक्तो भवति। (**मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः। आत्मश्लाघानिरतो धीरै धीरोद्धतः कथितः**[३])। तस्य विशेषलक्षणं भवति–धीरोद्धतः पापकारी व्यसनी प्रतिनायकः। (सा.द. ३.१३१)

शिशुपालः जन्मवेलायां **स बाल आसीद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः। युवा कराक्रान्तमहीभृदुच्चकैरसंशयं सम्पत्ति-तेजसा रविः**[४] इति चतुर्भुजः पूर्णेन्दुसुन्दरवदनः आसीत्। **स्वयं विधाता सुरदैत्यरक्षसामनुग्रहावग्रहयोर्यदृच्छया। दशाननादीनभिराद्धदेवता-वितीर्णवीर्यातिशयान् हसत्यसौ**[५] इति सुरदैत्यरक्षसान् दण्डयितुं समर्थः स रावणस्योपरि अहसत्। **बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः**[६] इति रुक्मिणीहरणं कृत्वा श्रीकृष्णः शिशुपालस्य वैरी सञ्जातः। पुनः भौमासुरं नरकासुरं जेतुं गमनानन्तरं द्वारिकापुरीमाक्रम्य शिशुपालोऽपि स्ववैरभावं प्रकटितवान् (**श्रुतश्रवसः सुतः क्रियाया अरिः निर्वर्त्यते**)। अग्रपूजार्थं पृष्टः

---

१. शिशु.–२.११२
२. अष्टाध्यायी–४.३.८७
३. सा.द.–३.३३
४. शिशु.–१.७०
५. शिशु.–१.७१
६. शिशु.–२.३८

सन् भीष्मपितामह: श्रीकृष्णं सयुक्तिकं सर्वोत्कृष्टं प्रतिपादयति[१]। यदा राजा युधिष्ठिर: पूजां सम्पादयति, तेन अपमानित: शिशुपाल: क्रोधान्वितो भवति। यतो हि **'परिवृद्धिमत्सरि मनो हि मानिनाम्[२]'**। **'मत्तगज इव सुशोभते[३]'**। क्रोधेन प्रज्ज्वलितं तस्य मुखमण्डलं पुनश्च त्रिनेत्रयुक्तम-भवदिति अदृश्यत। (**इति चकृधे भृशमनेन ननु महदवाप्य विप्रियम्। याति विकृतिमपि संवृतिमत् किमु यन्निसर्गनिरवग्रहं मन:[४]**)। स परुषवाक्येन युधिष्ठिरं निन्दितवान्। अन्यान् राज्ञ: अवमानयितुं किमर्थमाहुतवानिति पृष्टवान्[५]। तत: श्रीकृष्णेन सह सम्बन्धहेतो: भीष्म: नीचजनसंसर्गेण निम्नगाया: पुत्र: ज्ञायते इति उक्तवान् [६]मगधराज्ञ: जरासन्धाद् अष्टादशवारं पराजित: श्रीकृष्णो बलरामस्य बलेन बलान्वित: इति तस्य मतम्[७]।

शिशुपाल: भगवत: श्रीकृष्णस्य मधुसूदन–इष्टसत्य–चक्रधर–श्रीपति–विक्रमी–भूमिभृत्–तुलितभूभृत्–निर्गुणादीनां[८] नाम्नां यथा व्याख्यां करोति, तस्मात् तस्य तर्कशक्ति: ज्ञायते। यथा एष: गोपरूप: एकान्ते विशालवने विहरन् बृहता मधुना माक्षिकपटलेन हतेन जगति मधुसूदन इति नाम प्राप्तवान्। न तु मधुनामानं दैत्यं हत्वा इति निन्दा। इष्टसत्य: सत्यवादी श्रीकृष्ण: यथार्थत: ऐन्द्रजालिक: य: खलु प्रजा: छलयन् मिथ्यां सत्यरूपेण दर्शयति। तस्य इष्टसत्यनाम्न: कारणं भवति, राज्ञ: नग्नाजित: कन्या सत्यभामा। इष्टप्रिया सत्या सत्यभामा यस्य स: इष्टसत्य:। श्रीकृष्ण: युद्धे भयभीतान् स्वचक्रं सैन्यं नैव धृतवान् रक्षितवान्, अपि तु रथाङ्गं चक्रं सततं धृत्वा जगति चक्रधर इति परिचितोऽस्ति। ययातिना शप्त: श्रीकृष्ण: जीवने राजा नैवाभवत् नाम श्रिय: राजलक्ष्म्या: पति: नाभवत्। परन्तु सागरकन्याया: लक्ष्म्या: श्रिय: पति: भूत्वा श्रीपति नाम्ना परिचितोऽभूत्। श्रीकृष्ण: युद्धक्षेत्रे स्वपराक्रमं न प्रदर्शयति। अपि तु वामनावतारे प्रयत्नेन व्योम्नि पदक्षेपं कृत्वा

---

१. शिशु.–१४.६२
२. शिशु.–१५.१
३. शिशु.–१५.४
४. शिशु.–१५.११
५. शिशु.–१५.१८
६. शिशु.–१५.२१
७. शिशु.–१५.२४
८. शिशु.–१५.२३-३२

विक्रमी इति प्रसिद्धः सञ्जातः। जरासन्धेन अष्टादशवारं पराजितः श्रीकृष्णः यद् भूभृत् नाम्ना परिचितः तस्य भूभृतः अर्थो राजा न भवति। अपि तु भूता अतिता भूः भूमिः यस्य स भूभृद् अर्थो भवति। तस्य भागधेयं यद् राजभिः तुलितः तिरस्कृतोऽपि क्षणं धृताचलः गोवर्धनपर्वतः पृथिवीतले स तुलितभूभृन्नाम्ना ख्यातः। न तु शिशुपालादिवन्महावीरादितुलनादिति भावः। सकलैः सर्वदोषैः युक्तं तस्य वपुः सर्वगुणैः शौर्यादिभिः त्यक्तम्। अतः गुणत्रितयस्य अभावस्य का चिन्ता, यतो हि एते त्रिगुणाः (सत्त्व-रज-तमः) सकलगुणेषु अन्तर्भुक्ताः भवन्ति।

धर्मशास्त्रज्ञः शिशुपालः 'अवधीज्जनङ्गम इवैष यदि हतो वृषो वृषं ननू.....[१] इति उक्त्वा वृषभस्य वधकर्ता श्रीकृष्णः अपवित्रशरीरयुक्तः, न तु पूजार्हैरिति उपस्थितान् राज्ञः कथयति। मातृभृतां पुतनां हत्वा स मातृद्रोहेण ग्रसितो भवति[२]। शकटासुरस्य वधः स्थिरचित्तानां मनः नैव प्रभावयति। राजानं कंसं हत्वा स स्वामिवधदोषेण युक्तः सज्जातः शिशुपालः सुशासकः आसीत्। शिशून् पालयतीति तस्य नाम शिशुपाल इति नामाभवत्। स न केवलं शिशून्, अपि तु शरणागतान् तरुणान् शत्रून् रक्षति[३]। येन तस्य शरणे गत्वा श्रीकृष्णः स्वं रक्षितुं समर्थो भविष्यतीति दूतमुखेन उपदिशति[४]।

**यदुवाच दुष्टमतिरेव परिविवदिर्मुरद्विषम्। द्व्यर्थमपि सदसि चेदिपतेस्त-दतोऽपराधगणनामगाद्वचः।** (१५.४७)

दयाशीलः शिशुपालः स्वार्थवशाद् असकृद् दोषावहं जनं नतिमात्रकेण अनुगृह्णाति[५]। युद्धे तस्य पराक्रमं दृष्ट्वा मित्राणि चन्द्रमा इति शत्रवः सूर्यरिति चिन्तयन्ति[६]। अन्यशस्त्रास्त्ररहितः स भुजद्वयाभ्यां चतुरङ्गां वाहिनीमपहाय बहुशः शक्रदन्तिना ऐरावतेन सह चतुर्दन्तयुद्धे सम्मिलितोऽभवत्[७]। यत्र श्रीकृष्णः उपेन्द्रः तत्र इन्द्रविजेता शिशुपालः

---

१. शिशु.-१५.३५
२. शिशु.-१५.३६
३. शिशु.-१६.५४
४. सा.द.-३.४७
५. शिशु.-१६.५५
६. शिशु.-१६.६४
७. शिशु.-१६.६९

अतीन्द्र:। कल्लोला: तरङ्गा: समुद्रस्य पारमवाप्य शीर्यन्ते। परन्तु शिशुपालस्य कीर्ति: तत्रापि प्रसारिता भवति।

विक्रमी शिशुपाल: युद्धे श्रीकृष्णस्य पराक्रमं असहमान: तमाह्वयति। धनुर्विद् चेदिराट् इति **'चेदिमहीभृता तदानीं तदनीकं दनुसूनुसूदनस्य। वयसामिव चक्रमक्रियाकं परितोऽरोधि विपाट-पञ्जरेण[१]'** इति शत्रुसैनिकान् परित: अरोधि। स विभिन्नोपायान् अवलम्ब्य दीर्घकालं युद्धमकरोत्, यस्य प्रतिकारं रोगाणां कृते राजवैद्यवत् श्रीकृष्णोऽकरोत्। अन्ते प्रज्ज्वलितेन सुदर्शनेन शिशुपालस्य शरीरं शिर:रहितमकरोत्। तस्य शरीरात् ज्योति:राशि: निर्गम्य भगवत: शरीरे प्राविशत्।

भगवत: विष्णो: सेवकस्य शापग्रस्तस्य शिशुपालस्य वध: अस्य महाकाव्यस्य कार्यं फलप्राप्तिरासीत् यत् स्वयं श्रीकृष्ण: अवतारं नीत्वा सुदर्शनचक्रेण युद्धरतं तं व्यापाद्य तत् करोति। सर्वशास्त्रविशारदस्य महाकवे: माघस्य वर्णनाचातुरीं दृष्ट्वा सत्यमेव उक्तम्—

**मुरारिपदचिन्ता चेत्तदा माघे रतिं कुरु।**
**मुरारिपदचिन्ता चेत्तदा माऽघे रतिं कुरु।।**

**सहायकग्रन्थसूची**


१. संस्कृत साहित्य का इतिहास, पं. बलदेव उपाध्याय
२. शिशुपालवधम्, पं.रामचन्द्र काक, पं. हाराभट्ट शास्त्री
३. महाकवि भारवि तथा माघ की कृतियों का तुलनात्मक अध्ययन–डॉ. चित्तरञ्जन मिश्र
४. साहित्यदर्पण:–पं.विश्वनाथ कविराज:
५. श्रीमद्भगवद्गीता




१. शिशु.–२०.१७

# नीतिशतकेऽलङ्कारसौन्दर्यविमर्शः

वैदिकवाङ्मयादारभ्यार्वाचीनसंस्कृतसाहित्यं यावन्नीतिमन्त्राः सुभाषितानि च सप्रसङ्गं सावलीलं प्रपञ्चितानि सन्ति। **'सहनाववतु', 'स्वाध्यायान्मा प्रमद', 'वसुधैव कुटुम्बकम्', 'विश्वं भवत्वेकनीडम्' 'सर्वे भवन्तु सुखिनः', 'सा मा शान्तिरेधि'** इति प्रसिद्धानि प्रचलितानि जनजनहृदयाह्लादीनि नैकानि सन्ति नीतिपरकाणि सुभाषितानि।

**'अलङ्कारः सौन्दर्यम्', 'काव्यस्यात्मा ध्वनिः' 'वाक्यं रसात्मकं काव्यम्' 'रमणीयार्थप्रतिपादकः शब्दः काव्यम्'** इति लक्षणेष्वपि सौन्दर्यं विजृम्भति। **'क्षणे क्षणे यन्नवतामुपैति'** यत्काव्यचमत्कारत्वमभिनवत्वं च काव्ये प्रतिभाति, तत्सर्वं नीतिग्रन्थेषु पुष्पितानि सन्ति। नीतिग्रन्थेषु यद्यपि शुक्रनीति–कामन्दकनीति–विदुरनीति–चाणक्यनीतिप्रभृतयो ग्रन्थाः सन्ति, तथापि भर्तृहरिप्रणीतं नीतिशतकं सर्वजनसंवादि हृदयसंवेदनशालि च भूत्वा पृथक् महत्त्वं धत्ते।

नीतिशतकस्य श्लोकेषु वस्त्वलङ्काररसध्वनयः सम्यग् विलसन्ति। अपि च काव्यकलाकोविदो भर्तृहरिः समाजात्समजाच्चोदाहरणानि प्रस्तौति। प्रतिश्लोकमलङ्कारसौन्दर्यं सुतरां चकास्ति। अलङ्कारेषु भर्तृहरिः काव्यलिङ्गं बहुमनुते। यतो हि संख्याकृतेष्वलङ्कारेषु ग्रन्थेऽस्मिन् काव्यलिङ्गं सर्वोपरि राराजते। 'हेतुर्वाक्यं पदार्थत्वे काव्यलिङ्गं निगद्यते'[१]। यदि वाक्यार्थः पदार्थो वा कस्य हेतुर्भवति तदानीं काव्यलिङ्गं भवति। कविर्मानवसुलभगुणेभ्य उदाहरणमन्वेषयति। आदावेव मङ्गलपद्यात्परं नीतिशतकस्य प्रयोजनवर्णने काव्यलिङ्गसौन्दर्यं सहृदयहृदयसंवादि भवति। तद् यथा—

**बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः।**
**अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्।।** [२]

अत्र कविहृदयजीर्णतायाः हेतुरूपेण विदुषां मत्सरता, राज्ञां गर्वान्धता, साधारणजनानामज्ञानता च प्रतिपादिताः। काव्यलिङ्गस्यापरं किमपि विलक्षणमुदाहरणं कविः प्रस्तौति यत्र काव्यसौन्दर्यमधिकतरं विलसति।

**यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः।**
**यदा किञ्चित्किञ्चिद् बुधजनसकाशादवगतं**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः।।**[३]

अस्मिन् पक्षे 'मूर्खोऽस्मीति' इति ज्ञानोदयस्य कारणं यदा किञ्चित्किञ्चिद् बुधजनसकाशादवगतं वर्णितमस्ति। अत्र मूर्खत्वमित्यनुभवे बुधजनसङ्गमो हेतुत्वेन प्रस्तुतः। तस्मात्काव्यलिङ्गम्। एवं बहुषु श्लोकेषु काव्यलिङ्गस्य सौन्दर्यमनुभूयते, यत्सारः प्रस्तूयते संक्षेपेण।

दाक्षिण्यं स्वजने इत्यत्र लोकस्थितेऽर्थाल्लोकव्यवहारस्य हेतुत्वेन दाक्षिण्यं स्वजने, दया परिजने, शाठ्यं सदा दुर्जने, प्रीतिः साधुजने, नयो नृपजने, विद्वज्जने आर्जवम्, शौर्यं शत्रुजने, क्षमा गुरुजने, कान्ताजने धृष्टतेति च वर्णिताः। अतः एते हेतवः काव्यलिङ्गस्याधारा भवन्ति। सिंहः शिशुरपि निपतति इत्यस्मिन् पद्ये अवस्था प्रतापस्य कारणं न भवति। स्वभाव एव प्रतापस्य कारणत्वात्काव्यलिङ्गं स्फुटं चमत्कारं व्यनक्ति।

तानीन्द्रियाण्यविकलानि इति पद्ये धनाभावो एव विचित्रदशायाः हेतुः स्वीकृतः। अस्मात् काव्यलिङ्गम्। अत्र प्रतिपादिता वर्णनशैली अलङ्कारस्य शोभां वर्द्धयति।

यस्यास्ति वित्तं स नरः कुलीनः पद्येऽस्मिन् सर्वे गुणाः काञ्चनमाश्रयन्ति इत्यभिहितार्थं त्रीभिः कारणैः समर्थयन्ति। तस्मात्काव्य-लिङ्गचमत्कारः।

'भग्नाशयस्य करण्डपिण्डिततनोः' इत्यत्र दैवं व्यक्तेरुत्कर्षयो-र्हेतुरिति प्रतिपादयितुं मूषकसर्पकथोपन्यासमाध्यमेन सपदि चमत्कार आपादितः। तस्मात्कुवलयानन्दे लक्षणं काव्यलिङ्गस्य साधूक्तम्। 'समर्थनीयस्यार्थस्य काव्यलिङ्गसमर्थन'मिति। एवं च 'आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपु' रित्यत्रोदाहरणे कुर्वाणो नावसीदति, उद्यम एव हेतुर्वर्णितः। अस्मात्काव्यलिङ्गम्। एवं 'छिन्नोऽपि रोहति तरुः' 'ब्रह्मा येन कुलालवन्नियमितो' 'स्थाल्यां वैदुर्यमय्यां पचति' 'भीमं वनं भवति तस्य पुरं प्रधानं' 'कान्ताकटाक्षविशिखा' 'वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्' इत्येतेषु स्थलेष्वपि काव्यलिङ्गस्य सौन्दर्यं विजृम्भते।

## अर्थापत्तिसौन्दर्यम्

अलङ्कारसौन्दर्यप्रदर्शने अपराऽभिरुचिः कवेर्वर्तते अर्थापत्तिरलङ्कारः साहित्यदर्पणानुसारेणास्य लक्षणमित्थं भवति।

दण्डापुपिकान्यायार्थागमोऽर्थापत्तिरिष्यते[४] **मूषिकेण दण्डो भक्षित** इत्यनेन तत्सहचरितापुपभक्षणमर्थादायातं भवतीति नियतसमानन्याया-दर्थान्तरमापततीत्येव न्यायो दण्डापुपिका। अत्र च क्वचित्प्राकरणिकार्थाद-प्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात्प्राकरणिकार्थस्येति द्वौ भेदौ। अस्योदाहरणं नीतिशतके

**अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।**
**ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति।।**[५]

अत्र ज्ञानलवदुर्विदग्धमनुष्याय शिक्षितजनसामर्थ्यं न विचार्य्य ब्रह्मणः क्षमता आक्षिप्यते। अस्मादर्थापत्तिः। एवं प्रकारेणार्थापत्तेरलङ्काराणां चमत्कारः प्रपञ्चितः। अन्यत्रापि यत्र बारं बारं 'किम्' शब्दस्य प्रयोगेणार्थोपलब्धिर्भवति तत्राप्यर्थापित्तिरापद्यते यथा—

**क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद् देहिनां ज्ञानिश्चेदनलेन किं यदि सुहृद् दिव्यौषधैः किं फलम्। किं सर्पैः यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम्**[६]। अत्र प्रतिचरणं किमिति पदप्रयोगेणार्थस्य तुल्यन्यायद्वारा प्राकरणिकोपस्थापनेनाप्राकरणिकस्य प्रतीतिर्जायते। यथा क्षान्तिरिति प्राकरणिकद्वारा कवचस्य अरिप्राकरणिकद्वारा क्रोधस्य च ज्ञानं समुपजायत इति सौन्दर्यमनुभूयते।

यत्र कैमुत्यन्यायस्य व्यवहारो जायते तत्रापि अर्थापत्तिः। तल्लक्षणं यथा कुवलयानन्दे **कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते**। पण्डितराज एनं तुल्यन्यायपदेन व्यपदिशति **'केनचिदर्थेन तुल्यन्यायत्वादर्थान्तरस्या-पत्तिरर्थापत्तिः'**। तदुहारणं यथा—

**आज्ञा कीर्तिः पालनं ब्राह्मणानां**
**दानं भोगो मित्रसंरक्षणं च।**

**येषामेते षड्गुणा न प्रवृत्ताः।**
**कोऽर्थस्तेषां पार्थिवोपाश्रयेण।।**[७]

अत्राश्रयप्राप्त्यर्थं राज्ञः के के गुणाः स्युरिति वर्णनप्रसङ्गे 'राजा' इति यथार्थार्थः तुल्यगुणैः षड्प्रकारकैः प्रतिपादितः। तस्मादर्थापत्तिरलङ्कारः। एवं प्रकारेण 'त्वमेव चातकाधारोऽसीति'। 'दुर्जनः परिहर्तव्यः' जाड्यं ह्रीमति 'लोभश्चेदगुणेन किम्' 'उद्भासिताऽखिलखलस्य' 'प्रदानं प्रच्छन्नं' इत्येतेषु श्लोकेषु अर्थापत्तेरलङ्कारस्य चमत्कारो दरीदृश्यते।

## अर्थान्तरन्याससौन्दर्यम्

एतल्लक्षणं साहित्यदर्पणे यथा—

**सामान्यं वा विशेषेण विशेषस्तेन वा यदि**
**कार्यं च कारणेनेदं कार्येण च समर्थ्यते।**
**साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः।।**[८]

विशेषेण सामान्यम्, सामान्येन विशेषम्, कारणेन कार्यम्, कार्येण कारणम्, एतच्चत्वारः साधर्म्यवैधर्म्यभेदेन अष्टौ भवन्ति। ग्रन्थेऽस्मिन् प्रायः सर्वविधश्चमत्कारा उपलभ्यन्ते। सर्वेऽर्थान्तरन्यासालङ्काराः सुभाषितानि भवन्तीति वक्तुं शक्यते।

(i) विवेकभ्रष्टानां भवति विनिपातः शतमुखः। अत्र स्वर्गात्समुद्रपतन-पर्यन्तमधोगमनरूपी विशेषभावः पतनरूपिसामान्ये समर्थ्यते।

(ii) न भवति विसतन्तुर्वारणं वारणानाम्। अत्र पूर्वार्धस्योत्तरार्धेन साकं समर्थनम्।

(iii) 'सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्' अत्र भक्षणरूपिसामान्यभावं शुनः सिंहस्य खाद्यप्राप्तिरूपिविशेषचेष्टाभ्यां समर्थयति। अतः विशेषद्वारा सामान्यस्य समर्थनरूपोऽर्थान्तरन्यासालङ्कारः।

(iv) सर्वे गुणाः काञ्चनमाश्रयन्ति। अत्र त्रिभिर्विशिष्टविशेषणैः एतत्सामान्यं समर्थ्यते। अस्मादर्थान्तरन्यासस्य चमत्कारेण साकं काव्यलिङ्ग-स्याप्यापूर्वसमावेशः।

(v) सेवाधर्मः परमगहनो योगिनामप्यगम्यः। अत्रापि सामान्येन साकं विशेषस्य समर्थनत्वादर्थान्तरन्यासः।

(vi) 'प्रकृतिसिद्धमिदं हि महात्मनाम्' अत्रापि सामान्यवाक्यद्वारा नैकेषां गणानां समर्थनवशादर्थान्तरन्यासः। अनेन साकमनुप्रासादीनां छटा दरीदृश्यते।

(vii) 'स्वभाव एवैष परोपकारिणाम्' अत्रापि सामान्यस्य विशेषेण समर्थनम्। कुवलयानन्दस्य लक्षणमत्र सम्यक् सङ्गच्छते—उक्तिरर्थान्तर-न्यासः स्यात् सामान्यविशेषयोः। अत्रापि दीपकस्यापूर्वसमावेशो दृश्यते।

## अप्रस्तुतप्रशंसासौन्दर्यम्

साहित्यदर्पणानुसारेणास्यालङ्कारस्य लक्षणं भवति—

**अप्रस्तुतात्प्रस्तुतं चेद् गम्यते पञ्चधा ततः।**[९]

नीतिशतके प्रसिद्धमुदाहरणमस्ति—

**लाङ्गूलचालनमधश्चरणावपातं**
**भूमौ निपत्य वदनोदरदर्शनं च।**
**श्वा पिण्डस्य कुरुते गजपुङ्गवस्तु**
**धीरं विलोकयति चाटुशतैश्च भुङ्क्ते।**[१०]

अत्र प्रस्तुतरूपेण श्वागजयोश्चरितं वर्णितम्। अप्रस्तुतरूपेण श्वाऽधमजनचरित्ररूपेण गज उत्तमजनचरित्रत्वेन प्रतिपादितः एवं 'स्वल्पस्नायुवसावशेषमलिनम्' इत्यत्र शुनकस्य चेष्टाऽधमस्वभावरूपेण सिंहस्य चेष्टा चोत्तमजनस्वभावरूपेण प्रस्तुतादप्रस्तुतं प्रदर्शितम्। एवं प्रकारेण महाकविना पशुपक्षिणां स्वभाववर्णनमाध्यमेन भिन्नभिन्नमानवानां स्वभावः स्फारितः।

## दीपकसौन्दर्यम्

साहित्यदर्पणे दीपकस्य लक्षणम्—

**अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।**[११]
**अथ कारणमेकं स्यादनेकासु क्रियासु चेत्।।**

यदा अप्रस्तुतप्रस्तुतयोः धर्मैकसम्बन्धोऽथवा अनेकक्रियाणामेकेन कारकेण सम्बन्धस्तदानीं दीपकं भवति। स्थालीपुलाकन्यायेन नीतिशतकादु-दाह्रियते—

**श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन।**
**विभाति कायः करुणापराणां परोपकारैर्न तु चन्दनेन।।** [१२]

अत्र एका एव क्रिया विभाति श्रुतेन दानेन परोपकारैः सह सम्बन्ध्यते। अस्मात् क्रियादीपकम्। एवं प्रकारेण 'दौर्मैत्र्यान्नृपत्तिर्विनश्यति' इति श्लोके 'विनश्यति' इति क्रियया साकं नैके कारकाः अन्वीयन्ते। 'केयूराणि न भूषयन्ति पुरुषम्' इत्यत्र एकया क्रियया सह कर्तॄणामन्वयः। एवं च वदन्ति **वर्ण्यावर्ण्यानां धर्मैक्यं दीपकं बुधाः**। यदा वर्ण्यस्य अवर्ण्यस्य च धर्मैक्यं भवति तदानीमपि दीपकमपि केचन।

## समुच्चयसौन्दर्यम्

**समुच्चयोऽयमेकस्मिन्सति कार्यस्य साधके।**
**खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत्** [१३]**।**

यत्र कार्यस्य साधकमेकत्वे सति बहुनि साधकतत्त्वानि युगपद् भवन्ति तत्र समुच्चयः। नीतिशतके यथा—

**दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने**
**प्रीतिः साधुजने नयो नृपजने विद्वज्जने चार्जवम्।**
**शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता**
**ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः।।** [१४]

अत्र लोकस्थितिसाधनाय नैकानि साधकतत्त्वानि दाक्षिण्यं स्वजने, दया परिजने इत्यादीनि भवन्ति। एवं प्रकारेण 'जाड्यं धियो हरति सिञ्चति वाचि सत्यम्' 'शशी दिवसधूसरो पलितयौवना कामिनी' 'वाञ्छासज्जन-सङ्गमे परगुणे प्रीतिर्गुरौ नम्रता' 'पापान्निवारयति योजयते हिताय' 'क्वचिद् भूमिशय्या क्वचिदपि पर्यङ्कशयनः', 'ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो' इत्यादिषु श्लोकेषु समुच्चयालङ्कारस्य चमत्कृति भूरि दृश्यते। एभिः काव्यस्य शोभातिशयो वर्धते।

## उदात्तसौन्दर्यम्

**लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते।**
**यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत्।।** [१५] इति

साहित्यदर्पणे लक्षणं प्रतिपादितम्। अन्यत्रापि सामान्यपरिवर्तनेन लक्षणं किञ्चिद् भिन्नं वर्णितम्।

**समृद्धिमद्वस्तुवर्णनमुदात्तः।**
**उदात्तमृद्धेचरितं श्लाघ्यं चान्योपलक्षणम्।**

नीतिशतकस्य प्रसिद्धमुदाहरणम्।

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**
**नास्ति येषां यशःकाये जरामरणजं भयम्।।**[१६]

अत्र महाकवेः लोकातिशयसमृद्धिमद् वस्तुवर्णनरूपचमत्कारोऽभिहितोऽस्ति। तथैव वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता—अत्र सज्जनस्य लोकोत्तरता 'विपदि धैर्यमथाभ्युदये क्षमा' अत्रोत्तमजनचरित्रस्य महनीयानां गुणानामुदात्तः। 'इतः स्वपिति केशवः कुलमितस्तदीयद्विपाः' अत्र समुद्रस्य लोकोत्तरतावर्णनं 'निन्दतु नीतिनिपुणा' अत्र श्लाघ्यचरितवर्णनरूपमुदात्तालङ्कारः स्फुटं प्रतिपादितोऽस्ति।

## परिकरसौन्दर्यम्

**उक्तिविशेषणैः साभिप्रायैः परिकरो मतः**[१७] उदाहरणं यथा—

**दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये।**
**स्वानुभूत्यैकमानाय नमः शान्ताय तेजसे।।**[१८]

दार्शनिकेऽस्मिन् पद्ये परब्रह्मणः कृते व्यवहृतानि सर्वाण्यैव विशेषणानि साभिप्रायाणि वर्त्तन्ते। तस्मात्परिकरः।

## दृष्टान्तसौन्दर्यम्

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्**[१९]। साहित्यदर्पणस्यानेन लक्षणानुसारेण वाक्यद्वये यथा उपमेयोपमानयोः प्रतिबिम्बनमवलोक्यते तदानीं दृष्टान्तः। स च साधर्म्यवैधर्म्यभेदेन द्विधा। अन्यत्रापि चेद् बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिः। नीतिश्लोके उदाहरणं यथा—

**दुर्जनः परिहर्तव्यो विद्ययाऽलङ्कृतोऽपि सन्।**
**मणिना भूषितः सर्पः किमसौ न भयङ्करः।।**[२०]

इत्यत्र सर्पदुष्टयोः विम्बप्रतिबिम्बभावः 'जडचेतनयोऽपि पादैः स्पृष्टः' इत्यत्र सूर्यकान्तमणितेजस्विनोः बिम्बप्रतिबिम्बभावः 'तथैव कदर्थितस्यापि हि धैर्यवृत्तेः' इत्यत्राग्नेः ज्वालायाः धैर्यवतः धैर्यस्य च बिम्बप्रतिबिम्बभावश्चावलोक्यते।

## यमकसौन्दर्यम्

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते।।**[२१]

अत्र द्वयोरपि पदयोः क्वचित्सार्थकस्य क्वचिच्च निरर्थकस्य युगपदावृत्तिर्भवति चेद् यमकम्। अस्योदाहरणं नीतिशतके यथा—

**छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः।**
**इति विमृशन्तः सन्तः सन्तप्यन्ते न दुःखेषु।।**[२२]

अत्र सन्तः सन्तप्यत युगपदावृत्तिः। तथैव लज्जागुणौघजननीं जननीमिव स्वाम् इत्यस्मिनुदाहरणे जननीं जननीं युगपदावृत्तिश्चमत्कारत्वाद् यमकम्।

## श्लेषसौन्दर्यम्

**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते**[२३]। साहित्यदर्पणस्य एतल्लक्षणं नीतिशतकस्योदाहरणेन एवं सम्बध्यते—

**एकेनाऽपि हि सूरेण पदाक्रान्तं महीतलम्।**
**क्रियते भास्करेणेव स्फारस्फुरिततेजसा।।**[२४]

पदाक्रान्त इत्यत्र पदशब्दः चरण–किरणार्थौ द्योतयति। अस्माद्छ्लेषसौन्दर्यं विभाति।

## उपसंहारः

अलङ्कारस्य लक्षणं कुर्वता साहित्यदर्पणकारेण विश्वनाथेन प्रत्यपादि—

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत्।।**[२५]

अर्थात् रसगुणरीत्यादीनामुपकारकाः शोभाभिवर्धकाः शब्देषु अर्थेषु चास्थिररूपेण स्थिताः धर्मा यथाऽङ्गनादीनामाभूषणवद् उपमाश्लेषादयो अलङ्कारा भवन्ति। अलङ्क्रियतेऽनेनेत्यलङ्कार इति न्यायेन एते रसादीनुपकुर्वन्तः काव्ये राराजन्ते। पुनश्चैते शोभातिशायिनो भवन्ति। लक्षणे 'अस्थिरा' इति पदव्यवहारस्य तात्पर्यमस्ति यद्रसादिवद् एते नियतधर्माणो न स्युः। 'काव्यस्यात्मा ध्वनिः' यथा आत्मारहितशरीरं शरीरं न भवति, तथैव रसगुणरहितकाव्यं भवितुं नार्हति। परन्तु शरीरिणां यदि अलङ्काराः न स्युस्तथापि ते स्थास्यन्ति। अत एवालङ्कारविरहितेऽपि काव्यत्वस्य न हानिरिति ज्ञातव्यम्। निश्चप्रचमेतद्वक्तुं शक्यते यच्छोभातिशायित्वेनालङ्कारा अपूर्वां चमत्कृतिमादधानाः सर्वत्र चकासन्ते। भर्तृहरिप्रणीते नीतिशतके एतादृशालङ्काराणां चमत्कारिता शोभितिशयता सुन्दरता च प्रति पद्यं विजृम्भते।

**सन्दर्भाः**


१. साहित्यदर्पणः दशमः परिच्छेदः, १०
२. नीतिशतकम्, २
३. नीतिशतकम्, ८
४. साहित्यदर्पणः, १०
५. नीतिशतकम्, ३
६. नीतिशतकम्, २१
७. नीतिशतकम्, ४८
८. साहित्यदर्पणः, १०
९. साहित्यदर्पणः, १०
१०. नीतिशतकम्, ३१
११. साहित्यदर्पणः, १०
१२. नीतिशतकम्, ७२
१३. साहित्यदर्पणः, १०
१४. नीतिशतकम्, २२
१५. साहित्यदर्पणः, १०
१६. नीतिशतकम्, २४
१७. साहित्यदर्पणः, १०
१८. नीतिशतकम्, १
१९. साहित्यदर्पणः, १०
२०. नीतिशतकम्, ५३
२१. साहित्यदर्पणः, १०
२२. नीतिशतकम्, ८७
२३. साहित्यदर्पणः, १०
२४. नीतिशतकम्, १०६
२५. साहित्यदर्पणः, १०


*

# वर्तमानकाले संस्कृतसाहित्यस्योपयोगिता

अस्माकं देशस्य नाम भारतवर्षम्। 'भा' इति ज्ञानम्। 'रत' इति व्यापृत:। अत: यस्य देशस्य निवासिन: ज्ञानचर्चया कालं नयन्ति, स देश: भारतवर्षं नाम्ना ख्यात:। प्राचीनकाले संस्कृतभाषा एव जन-जनस्य भाषा 'लोकभाषा' आसीत्। एतद् वाल्मीकिरामायणात् स्पष्टं भवति।

**यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृताम्।**
**रावणं मन्यमाना मां सीता भीता भविष्यति[१]।।**

भाषा परिवर्तनशीला भवति। अत: कालानुसारेण प्रयोगदृष्ट्या एषा भाषा द्विधा विभक्ता—वैदिकी लौकिकी च। प्रथमत: भाषा, तदनुसारेण व्याकरणरचना सञ्जाता। अत: व्याकरणस्य द्विधा विभाजनं भवति। महर्षिपाणिने: पूर्ववर्तिव्याकरणम् अपाणिनीयनाम्ना परिचितम्। महर्षे: पाणिने: परवर्तिसाहित्यं लौकिकसंस्कृतेन विरचितम्। संस्कृतसाहित्यस्य मूलं वेदे सन्निहितम्। वेद: न केवलं भारतवर्षस्य, अपि तु समग्रमानवजाते: आद्यसाहित्यम्[२]। वैदिकसाहित्ये वेदचतुष्टयं (ऋक्-यजु-साम-अथर्वाख्या:) तदनुसारेण तेषां संहिता-ब्राह्मण-आरण्यकोपनिषद्ग्रन्था:, वेदाङ्गानि (शिक्षा-कल्प-व्याकरण-निरुक्त-ज्योतिष-छन्दशास्त्राणि) च अन्तर्भुक्ता:। वैदिक-साहित्यस्य पर्यालोचना क्रियते चेद् आर्यसभ्यताया: स्थिति-समृद्धि-संस्कृतिविषये सम्यक् ज्ञानं भवति। अतीत-वर्तमान-भविष्यन्नाम्ना काल: त्रिधा विभक्तो भवति। अतीतस्य ज्ञानं नीत्वा वर्तमानस्य विचार: क्रियते भविष्यं व्यवस्थितं कारयितुम्। वर्तमानयुगमाधुनिकयुगं वैज्ञानिकयुगं प्रगतिमार्गे अग्रे सरति। परन्तु सर्वत्र समस्याया आधिक्यं सर्वान् व्यथयति। किं वा कारणं, कथं वा समाधानं भविष्यतीति सर्वे शिक्षिताशिक्षिता:, बुद्धिजीविन: कर्मजीविन: चिन्तातुरा: सन्ति। वैदिकसाहित्ये सर्वासां समस्यानां निदानं सन्निहितमस्ति, सा समस्या सामाजिकी-आर्थिकी-राजनीतिकी वा भवतु नाम।

---

१. रामा. सुन्दर. ३०.१८

२. वेदोऽखिलज्ञानमूलम्।

परिवारात् समाजस्य प्रारम्भो भवति। एषो गृहस्थाश्रमस्याङ्गभूतः। आश्रमेषु श्रेष्ठः[१]। परिवारः संयुक्तः एककश्च भवति। प्राचीनकाले समाजे संयुक्तपरिवारस्य प्रचलनमासीत्, यस्य मुख्यः वयोज्येष्ठः चरित्रवान् निर्णायकः पुरुषो भवति स्म। प्रायशः पुरुषाः बहिः कुलानुसारेण कार्यं कुर्वन्तः आसन्। स्त्रियः गृहकर्मणि व्यापृताः आसन्। पुरुष-नारीणां शारीरिकसंरचनादृष्ट्या एषा समीचीना आसीत्, यतो हि नारीणां मानसिकशक्तिः, पुरुषाणां च शारीरिकशक्तिः अधिका भवति। संयुक्त परिवारे वृद्धाः रुग्णाः बालाः शारीरिकदृष्ट्या असमर्थाः ये जनाः सर्वे सुरक्षिताः आसन्। वर्तमानसमये नार्यः बहिः कार्यरताः, तत्र आर्थिक-सामाजिक-कारणानि सन्ति। यतो हि ताः बहिः गच्छन्ति, अतः कार्यस्थले स्थातुमिच्छन्ति, न तु स्वगृहे। तेन बालाः केवलं पितृभ्यां तिष्ठन्ति। अनेन तेषां सहनशीलता-सहयोगादिसामाजिकगुणानां विकासो न भवति। सामान्यकारणेन विशृङ्खलिताः, प्रतिहिंसापरायणाः च भवन्ति।

पुरा गृहे पुराणादीनां पठनं, नीतिशास्त्रस्य आलोचना प्रचलति स्म, अनेन केन किं कथं च करणीयं, किं करणेन किं भविष्यति, बालाः तस्मिन् विषये कालक्रमेण ज्ञानं प्राप्तवन्तः, येन अग्रे समस्यानां समाधानं कर्त्तुं ते समर्थाः अभवन्। आधुनिकजीवनशैली बालान् बालगृहे, वृद्धान् वृद्धाश्रमे, असमर्थान् उद्दिष्टसंस्थासु स्थातुं प्रेरयति। अनेन ते सर्वे मानसिककष्ट-मनुभवन्ति। परम्पराया अपि हननं भवति, येन क्रमशः संस्कृतिविषये ज्ञानं नश्यति।

शिक्षाव्यवस्था देशस्य विकासस्य मूलकारणं भवति। तदानीं गुरुकुलस्य आवासीयशिक्षाव्यवस्था प्रचलिता आसीत्। बालकबालिकाः युगपत् शिक्षां लभन्ते स्म उपनयनसंस्कारादनन्तरम्। कन्यानामपि उपनयनसंस्कारः पुराकालेऽभवत्। ता ब्रह्मचर्यधारणपूर्वकं स्वसुयोग्यं वरं प्राप्नुवन्ति स्म।[२] ततः पूर्वं विद्यारम्भः गृहे भवति स्म। सर्वे छात्राः निःशुल्कं

---

१. यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः।। मनु. ३.७७

२. ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्। (अथर्व. ११.८)

शिक्षां प्राप्तवन्तः। समाजस्य राजानः, धनिकाः देशस्य उन्नतये धनं यच्छन्ति स्म, येन छात्राणां कृते आवासभोजनादिव्यवस्था अभवत्। छात्राः भिक्षाटनं कृतवन्तः। तत्तु प्रतीकात्मकमासीत्, येन ते विनयिनः भविष्यन्तीति। विद्याग्रहणानन्तरं दीक्षान्तसमारोहः भवति स्म। तदवसरे छात्रः यथेष्टं यच्छति स्म गुरवे, तत्तु स्वतन्त्रमासीत्। अधुना सर्वत्र शिक्षाविषये आलोचना प्रचलति। निःशुल्कशिक्षा सर्वेषां कृते दिवास्वप्नवत् प्रतिभाति। पञ्चवर्षेभ्यः पूर्वं क्रीडनवेलायां बालाः विद्यालयं गच्छन्ति। तत्र कारणानि भवन्ति आंग्लभाषामाध्यमेन शिक्षाग्रहणं, परिजनानां समयस्य अभावः, शिक्षाक्षेत्रे प्रतियोगिता च। अस्यां परिस्थितौ बालस्य सम्यक् शारीरिक-मानसिक-बौद्धिकविकासः वा भवितुं नार्हति, येन स अग्रे विविधव्याधिना पीडितो भवति। शरीरेण धर्मसाधनं भवतीति ते विस्मरन्ति।[१] आधुनिकशिक्षायाः सर्वाः प्रणाल्यः प्राचीनकाले प्रचलिता आसन्।

शिक्षासमाप्तेः अनन्तरं विवाहसंस्कारः जायते स्म, यत् खलु परम्परानुसारेण अनुष्ठीयते। तदानीमष्टविधविवाहसंस्काराः प्रचलिताः आसन्। परन्तु ब्रह्मविवाहः आदृत आसीत्। अनेन परिवारस्य, समाजस्य, संस्कृतेः, परम्परायाः च संरक्षणमभवत्। परन्तु अधुना गान्धर्वविवाहः बहुशः प्रचलति, यस्य परिणामः प्रायशः दुःखान्तको भवति। प्राचीनशिक्षा न केवलं सामाजिकदृष्ट्या, अपि तु आध्यात्मिकविकासाय उपयोगी भवति स्म।[२]

जातिव्यवस्था भारतीयसमाजं सुदृढं कृतवती। कर्मानुसारेण मनुष्याणां विभाजनं ब्राह्मण-क्षत्रिय-वैश्य-शूद्रवर्णेषु अभवत्, यत् परवर्तीकाले जन्मानुसारेणाभवत्। मनुष्य-मनुष्यमध्ये गुणदृष्ट्या कर्मदृष्ट्या विभाजन-मवश्यम्भावी।[३] कदापि सर्वे जनाः समानरूपाः समानविचारयुक्ताः भवितुं नार्हन्ति। अद्यापि कोऽपि ब्राह्मणकुले जन्म नीत्वा शूद्रवद् आचरति चेत्, तस्य समाजे तादृशसम्मानं न भवति। अतः विभाजनस्य कारणं संस्कार इति मनुः उक्तवान्, न तु जन्म[४] वयमपि कर्मानुसारेण कमपि जनं जानीमः।

---

१. शरीरमाद्यं खलु धर्मसाधनम्। कुमार. ५.३३

२. सा विद्या या विमुक्तये।

३: चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः। (गीता. ४.१३)

४. जन्मना ब्राह्मणो ज्ञेयः, संस्काराद् द्विज उच्यते (मनुस्मृतिः)

पुनश्च वर्णानुसारेण कर्म विभाजितमासीत्।[१] येन वृत्तिहीनतायाः समस्या नासीत्, न चासीत् सैनिकानामभावः। 'अधुना सर्वे मानवाः समानाः' इति उद्घोषयन्तः नेतारः कामपि योजनां प्रारम्भं कृत्वा असफलाः भवन्ति। भारतवर्षं तथा देशः भवति, यत्र विचारव्यक्तस्य स्वतन्त्रता प्रथमतः प्रचलिता आसीत्।

परन्तु समाजस्य अधःपतनं कथमभवद् इति विचारयामः चेत् तत्र कारणानि भवन्ति, क्रमशः वैदिकसाहित्यं विपुलं सञ्जातम्। पठनस्य कृते अधिककालोऽपेक्षित आसीत्। नार्यः तावत् कालपर्यन्तं पठितुमसमर्था सञ्जाताः। गृहे यासां व्यवस्था आसीत्, धनिककन्यकाः वा शिक्षां प्राप्तवत्यः। परन्तु अधिकांशबालिकाः शिक्षालाभाद् वञ्चिताः अभवन्। अग्रे माता भूत्वा बालान् अध्यापयितुं ताः असमर्था अभवन्। युवकाः मध्ये विवाहं कृत्वा शिक्षाग्रहणं कृतवन्तः, येन तेऽमनयोगिनः अभवन्। अन्यकथितभाषाणां विकासः संस्कृतभाषां प्रति जनानामाग्रहं ह्रासमकरोत्, येन जनाः संस्कृतमाध्यमेन शिक्षाग्रहणं कर्तुं बिभ्यति स्म। परन्तु शिक्षायाः सर्वेषां क्षेत्राणां मूलं वेदे निहितमासीत्। अतः सम्यक् ज्ञानमाहर्तुमसमर्थाः छात्राः अग्रे कार्ये अकुशलाः सञ्जाताः। प्रथमतः कर्मनिर्धारणं योग्यतानुसारेण आसीत्, पश्चाद् जात्यनुसारेणाभवत्। हस्तकलायां कुशलाः शूद्राः स्वकौलिकवृत्तिं पितुः, न तु शास्त्रादधिगन्तुमैच्छन्, येन परवर्तिकाले ते क्रमशः अशिक्षिताः निरक्षराः अभवन्। अनेन ये शिक्षिताः ब्राह्मण-क्षत्रिय-वैश्याः तान् शूद्रान् हीनदृष्ट्या निरादरं कृतवन्तः। अधुना यद्यपि शूद्राणां विकासाय विभिन्नयोजनाः आद्रियन्ते, तथापि अन्येषां योग्यतायाः निरादरः क्रियते, येन तेषां मध्ये असन्तोषः वर्धते। आरक्षिताः च आरक्षितस्थाने निम्नस्तरत्वेन अयोग्याः सन्तः नियुक्ताः भवन्ति, येन ते परिश्रमकातराः भवन्ति। पुनश्च पदस्य गुरुत्वं न ज्ञात्वा दुरुपयोगं कुर्वन्ति। यतो हि यद्यपि सामाजिकपरिवर्तनहेतोः उच्चवर्गीयाः निम्नवर्गाणामनादरं कृतवन्तः, परन्तु अद्य ये नागरिकाः, ते तत्र कारणभूताः नासन्। तर्हि कथं स्वतन्त्रभारतवर्षे

---

१. सहजं किल यद्विनिन्दितं, न तु तत् कर्म विवर्जनीयम्।
पशुमारणकर्मदारुणः अनुकम्पामृदुकोऽपि श्रोत्रियः।। (अभि.शा. ५ अंकावतारः)

आधुनिकसमाजे प्रताडिताः सन्त विदेशं प्रति पलायनं कुर्वन्ति? अनेन तेषां ज्ञानेन विदेशाः समृद्धाः भवन्ति। अतः एतदपि चिन्त्यम्।

समाजस्य विभाजनं धर्म-धन-जातिदृष्ट्या त्रिधा भवति। जातिविषये विशदालोचना सञ्जाता। अपरः भवति धर्मः। धर्मस्य अर्थत्रयमालोचितं प्राचीनग्रन्थेषु कर्तव्य-नीति-कर्मकाण्डरूपेण। अधुना धर्म इति जनाः कर्मकाण्डं गृह्णन्ति। परन्तु प्रथमतः धर्मः कर्तव्यं सूचयति। एकस्य कर्तव्यमपरस्य अधिकारो भवति। कर्तव्यमिति कर्तव्यम्। तत्र इति कर्तव्यता भवति।[१] रोचते न वा, तत्र नैव विचार्यते। एवं जनः प्रतिबद्धः भवति। परन्तु अधुना धर्मस्य केवलं कर्मकाण्ड इति अर्थं कृत्वा सर्वे धर्मनिरपेक्षराष्ट्रे धर्मस्य अवधारणामालोचनां विना विस्मृत्य कर्तव्यविमुखाः सञ्जाताः। यः प्रतारयति प्रसन्नो भवति, परन्तु यः प्रताडितो भवति, कथं जीवति स एव जानाति। धर्मः नीतेः समाजस्य देशस्य नियमं पालयितुं जनान् प्रचोदयति। यदि धर्मः न स्थास्यति, समाजः विनष्टो भविष्यति। धर्मः कर्तव्यं नैतिकता इति समानार्थकशब्दाः। कर्मकाण्डस्य सामाजिकजीवने प्रभावः दरीदृश्यते। अस्माकं धर्मः नाम पूजापद्धतिः यथा कठोरा भवति तथा मृदुलाऽपि भवति। अत्र निन्दनीयो भवति पशुबलिः अत्रापि ज्ञानस्य अभावः कारणम्। बलिः इति देवतोद्देश्येन यत् प्रदीयते। तत्र 'हत्या' इति अर्थकरणं न समीचीनम्।[२] जनाः पशून् खादन्ति, अतः हत्यां कुर्वन्ति। प्रकृतधर्मस्तु धनागारे संरक्षितधनवद् भवति। यथा जनाः विपदि आवश्यकतानुसारेण व्यवहर्तुं धनं संरक्षितं कुर्वन्ति, तथैव धर्मः संरक्षितः सन् आगामिनि जन्मनि सम्यक् फलं प्रयच्छति। मुक्तिर्नाम मोक्षः। परन्तु धर्मनिरपेक्षराष्ट्रनाम्ना कुत्रापि धर्मविषये सम्यक् आलोचना न भवति। सामाजिकविशृङ्खलायाः एतदपि कारणम्।

अपरः सामाजिकव्याधिः भवति साम्प्रदायिकता। किं नाम सम्प्रदायः। सम्यक् रूपेण प्रदीयते इति सम्प्रदायः। यद् ज्येष्ठः कनिष्ठाय, पिता पुत्राय, गुरुः शिष्याय प्रयच्छति, तत् सम्प्रदायः। यस्मै प्रदीयते सः साम्प्रदायिकः। तर्हि शिक्षितः अशिक्षितः वा, निर्धनः धनिको वा कः साम्प्रदायिकः न

---

१. श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।। (गीता ३.३५)

२. हरिश्चन्द्रोपाख्यानम् (ऐ.ब्रा.)

भवति? केवलं ज्ञानस्य अभावः विवादस्य कारणम्। अमेरिकादेशस्य राष्ट्रपतिः ओबामामहोदयः जाति-धर्म-सम्प्रदायदृष्ट्या भारतीयसर्वकारस्य नीतिं निरादृतवान्। यावत् शीघ्रं मोहभङ्गो भविष्यति, तावत् लाभाय कल्पेत।

राजनीतिक्षेत्रे तथा प्रचलति। सर्वे समानाः इति सर्वे शिक्षां विना राजनीतिविशारदाः भवन्ति। पुरा राजपुत्राः राजसुखं विहाय वने वसन्तः दीर्घकालं यावत् प्रावीण्यं प्राप्तुं शिक्षाग्रहणं कृतवन्तः। परन्तु अधुना न काऽपि योग्यता निर्धारिता, येन नेतारः देशं समाजं वा मार्गं किं दर्शयिष्यन्ति, स्वयमेव समस्यायाः कारणभूताः भवन्ति। ये देशस्य स्थितिं बोद्धुमसमर्थाः, ते वैदेशिकनेतृभिः सह कथं वा कूटनीतिक-सम्बन्धं स्थापयितुं समर्था भविष्यन्ति?

आर्थिकस्थितिः कल्पनातीता। अर्थदृष्ट्या जनाः उच्च-मध्य-निम्नश्रेण्यां विभाज्यन्ते। अधुना धनिकाः धनं प्राप्नुवन्ति, निम्नाः सर्वकारसाहाय्यं, परन्तु मध्यवर्गीयाः किंकर्तव्यविमूढाः भवन्ति। अनेन नानासामाजिकविडम्बनाः उत्पद्यन्ते। अपराधाः वर्धन्ते। युवकाः आततायिनः भवन्ति। माओवादं स्वीकुर्वन्ति। माओवादः वैदेशिकवादः। तस्य आवश्यकता आपतिता नाम केवलं ज्ञानस्य अभावः, स्वसंस्कृतिं प्रति अनादरभावः अस्य कारणम्।

भारतवर्षं देवभूमिः कथ्यते। अत्र देवाः निवसितुं मानवशरीरं धारयन्ति। तर्हि कथं देवानां निवासाय एषा भूमिः उपयुक्ता भविष्यति, तस्मिन् विषये यत्नं कर्त्तुं जनाः संस्कृतसाहित्यस्य ज्ञानं लब्ध्वा एव समर्था भविष्यन्ति।

एवं विचारयामः चेत् संस्कृतसाहित्यस्य आवश्यकता आधुनिकसमाजे दरीदृश्यते। अस्य गुणं ज्ञात्वा वैदेशिकाः संस्कृतं प्रति अनुरक्ताः। विदेशेषु संस्कृतस्य अध्ययनमध्यापनं प्रचलति, यद्यपि अस्माकं सर्वकारः पराङ्मुखः तिष्ठति। भारतवर्षस्य भाषा स्वगुणेन विश्वभाषा सञ्जाता। अन्याः याः आधुनिकभारतीयभाषाः प्रचलन्ति, ता प्रादेशिकभाषाः। केवलं संस्कृतं राष्ट्रस्य भाषा भवति। अतः कोऽपि भारतीयः यत्र कुत्रापि तिष्ठतु नाम, यत् कर्म आचरतु नाम, यावत् पर्यन्तं तस्य संस्कृतज्ञानं न भवति, स सम्मानार्हो न भवति।

**जयतु संस्कृतम्, जयतु भारतम्।**



# महाभारत मे शंखलिखित उपाख्यान का रहस्य

पाण्डवों के विजयवर्णन के कारण महाभारत का प्रथम नाम जय था, जिसका प्रमाण 'जय नामेतिहासोऽयम्' एवं 'ततो जयमुदीरयेत्' आदि में उपलब्ध है। इसके पश्चात् इसका नाम 'भारत' पड़ा, जिसमें केवल चौबीस हजार ही श्लोक रहे।

**चतुर्विंशतिसाहस्त्रीं चक्रे भारतसंहिताम्।**
**उपाख्यानैर्विना तावद् भारतं प्रोच्यते बुधैः।।**

इस भारत नामक काव्य के साथ शाकुन्तल, मत्स्य, शिवि, सावित्री-सत्यवान् एवं नल आदि उपाख्यान एवं हरिवंश आदि जुड़ने से इसका नाम महाभारत पड़ा। जिसकी श्लोकसंख्या २४००० से बड़कर एक लाख हो गई। इसको शतसाहस्री संहिता कहा गया।

आख्यान और उपाख्यान के अर्थ के विषय में विद्वानों का मतभेद है। परन्तु ऐक्यमत है कि दोनों में कथानक ही हैं। दोनों में अन्तर बताते हुए श्रीमद्भागवत के प्रसिद्ध टीकाकार श्रीधरस्वामी कहते हैं—

**स्वयं दृष्टार्थकथनं प्राहुराख्यानकं बुधाः।**
**श्रुतस्यार्थस्य कथनमुपाख्यानं प्रचक्षते।।**

अर्थात् जिस कथानक का साक्षात्कार वक्ता ने स्वयं किया है, वह आख्यान है और जिन कथानकों का श्रवण अन्यों से किया है या परम्परा में प्रसिद्ध हैं, उसे उपाख्यान कहते हैं। उदाहरण के रूप में श्रीमद्भागवत को ले सकते हैं। उक्त पुराण के वक्ता शुकदेव एवं श्रोता परीक्षित हैं। जिन कथानकों को शुक स्वयं कहते हैं, उसे आख्यान और संवाद के रूप में जिन कथानकों को दूसरे वक्ताओं के माध्यम से वर्णन करते हैं, उसे उपाख्यान कहा जा सकता है। कुछ विषय वस्तु के महदल्पधिया कुछ समालोचकों ने बड़े कथानकों को आख्यान एवं लघु कथानकों को उपाख्यान के रूप में अभिहित किया है। महर्षि कात्यायन ने वार्तिक में आख्यान शब्द का प्रयोग लघु और बृहत् दोनों के लिए किया है—

"आख्यानाख्यातमिवेतिहास-पुराणेभ्यश्च"। उदाहरण के रूप में भाष्यकार पतञ्जलि ने 'यावक्रीतिक' एवं 'यायातिक' नाम से अभिहित किया है। आवक्रीत का आख्यान[1] वनपर्व में आता है, जो ययातिशर्मिष्ठाआख्यान जैसे प्रसिद्ध नहीं है, क्योंकि ययाति शर्मिष्ठा के आख्यान परवर्ती वाङ्मय में अधिक प्रसिद्ध हुआ है।

उपर्युक्त तथ्यों को यदि महाभारत के धरातल पर लाकर समीक्षा करते हैं, तो मूल कौरव-पाण्डवों के युद्ध एवं युधिष्ठिर की राज्यप्राप्ति को आख्यान एवं अन्य समस्त नल, शकुन्तला, हरिश्चन्द्र आदि कथानकों को केवल उपाख्यान ही कह सकते हैं।

प्रस्तुत शंखलिखित उपाख्यान शान्तिपर्व के राजधर्मानुशासन उपपर्व के अन्तर्गत तेइसवें अध्याय में आता है। व्यास जी उक्त उपाख्यान को बताकर युधिष्ठिर को राजधर्म का उपदेश देते हैं। इस उपाख्यान के माध्यम से धर्मशास्त्र में महाभारत की व्याप्ति को सिद्ध करना उक्त शोधपत्र का प्रयास है।

**शंखलिखित उपाख्यान**

शंख और लिखित दोनों कठोर व्रत का पालन करने वाले भाई थे।

**अत्राप्युदाहरन्तीमितिहासं पुरातनम्।**
**शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ[2]।।**

अध्ययन के पश्चात् दोनों ने बाहुदा नदी के तट पर अलग-अलग आश्रम बना कर रहने लगे। एक दिन लिखित शंख के आश्रम पर पधारे, जब शंख आश्रम में अनुपस्थित थे। विलम्ब होने पर क्षुधा की बाधा से लिखित ने फल तोड़ कर भक्षण किये। तब शंख आश्रम में पहुँच कर अनुज से बोले कि तुमने मेरी अनुमति के बिना फल तोड़ कर खाया है, अतः तुम्हे चोरी करने का दोष लगेगा—

**तमब्रबीत् तथा शङ्खस्तीव्ररोषसमन्वितः।**
**स्तेयं त्वया कृतमिदं फलान्याददता स्वयम्[3]।।**

बड़े भाई ने सुझाव दिया कि तुम राजा सुद्युम्न के पास जाकर अपने प्रायश्चित्त का विधान करो। तब लिखित राजा के पास जाकर चोर के लिए जो नियत दण्ड हो, उसे देने हेतु प्रार्थना करते हैं। राजा लिखित का सम्मान करते हुए वापस चले जाने हेतु बार-बार अनुरोध करते हैं। परन्तु लिखित दण्ड के बिना अन्य कोई आग्रह सुनना नहीं चाहते। तब राजा ने धर्मशास्त्र के नियम के अनुसार लिखित के दोनों हाथ कटवा देते हैं—

**ततः स पृथिवीपालो लिखितस्य महात्मनः।**
**करौ प्रच्छेदयामास धृतदण्डो जगाम सः**[४]।।

दण्ड पाकर अत्यन्त प्रसन्नता से बड़े भाई के पास जाकर पुनः अपने अपराध के लिये क्षमा याचना करते हैं। भाई ने कहा कि मैं तुम्हारे ऊपर कुपित नहीं हूँ। हम दोनों उच्च कुल में जन्म लेकर निर्मल एवं निष्कलङ्क यश को प्राप्त कर यदि अधर्म करेंगे, तो लोगों को क्या शिक्षा मिलेगी। तुमने प्रायश्चित्त किया। अब बाहुदा नदी में स्नान कर देव, ऋषि और पितरों को विधिपूर्वक तर्पण करो, भविष्य में अधर्म में कभी मन नहीं लगाना। अग्रज के आदेश से जब स्नान के पश्चात् तर्पण के लिए चेष्टा की तब कमलसदृश उनके दोनों बाहु प्रकट हो गये।

**प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ।**
**ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ**[५]।।

अग्रज शंख लिखित को समझाते हैं कि मैंने तुमको दण्ड नहीं दिया, कारण दण्ड देना राजा के अधिकारक्षेत्र में आता है। अतः तुमने दण्ड स्वीकार करके पितरों सहित पवित्र हो गये। इस कथानक के द्वारा **धर्मो रक्षति रक्षितः** की उदात्त भावना को प्रकटित कर व्यास जी युधिष्ठिर को राजधर्म का उपदेश देकर क्षेत्रिय धर्म का पालन करके प्रजाओं की रक्षा के लिए प्रेरित करते हैं।

**स्वधर्मं चर धर्मज्ञ! यथाशास्त्रं यथाविधि।**
**न हि ग्राहस्थ्यमुत्सृज्य तवारण्यं विधीयते**[६]।।

## धर्मशास्त्र के ग्रन्थों में शंखलिखित उपाख्यान की व्याप्ति

संस्कृत वाङ्मय में शंख नामक चार चरित्रों का उल्लेख मिलता है।

१. कुबेर के धनागार से सम्बन्धित एक अधिकारी है, जिसका उल्लेख अनुशासन पर्व में मिलता है[७]।

२. एक नाग है, जो कश्यप एवं कद्रू से उत्पन्न है[८]।

३. विराट राजा के पुत्र[९] जो दुर्योधन द्वारा धेनुहरण के समय उनसे युद्ध किया था।

४. केकय वंश का राजकुमार जो पाण्डवों के पक्ष में कौरव के साथ युद्ध किया था[१०]।

५. एक महर्षि जो लिखित के अग्रज थे एवं उक्त कथा उपाख्यान से सम्बद्ध है।

लिखित नाम से दो चरित्रों का उल्लेख पुराणवाङ्मय में आता है। एक तो शंख महर्षि के अनुज के रूप में। द्वितीय चम्पकपुरी राज्य के राजा हंसध्वज के राजपुरोहित के रूप में।

## शंखलिखित स्मृति

याज्ञवल्क्य ने शंख-लिखित को धर्मशास्त्राकारों के रूप में गिना है। तन्त्रवार्तिक के अनुसार उक्त स्मृति शुक्ल युजुर्वेद के वाजसनेयसंहिता के अन्तर्गत है। पराशरस्मृति के अनुसार कृत, त्रेता, द्वापर एवं कलियुग में मनु, गौतम एवं शंखलिखित स्मृतियों को प्रमाण के रूप में स्वीकार किया गया है[११]। विश्वरूप ने इसकी प्रशंसा में यह बतलाया है कि मनु द्वारा घोषित धर्म पर शंख-लिखित ने अध्ययन किया। परवर्ती काल में धर्मशास्त्र के अनेक भाष्यकारों एवं निबन्धकारों ने उक्त स्मृति से अनेक उद्धरण अपने-अपने ग्रन्थों में लिया है। अधिकांश उद्धरण गद्यभाग में हैं। परन्तु उक्त उद्धरण भाग छोड़कर यह स्मृति ग्रन्थ मूलरूप में उपलब्ध नहीं है।

महामहोपाध्याय पी०वी० काणे ने जीवानन्द के स्मृतिसंग्रह का उल्लेख करते हुए कहा है कि उक्त धर्मसूत्र में अठारह अध्याय हैं, जिसमें शंख ३३० एवं लिखित के ९३ श्लोक पाये जाते हैं। मिताक्षरा में उन श्लोकों में से ५० श्लोक उद्धृत हैं।

शंखस्मृति के अठारह अध्यायों के विषयवस्तु निम्नवत् हैं—प्रथम में ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्र के कर्मविधान, द्वितीय में उन चार वर्णों के संस्कार विधान, तृतीय में आचार, चतुर्थ में विवाह संस्कार, पञ्चम में पञ्च महायज्ञ एवं गृहस्थाश्रम की प्रशंसा, षष्ठ में वानप्रस्थ एवं संन्यास के धर्म, सप्तम में प्राणायाम लक्षण, अष्टम में नित्य नैमित्तिकादि स्नान, नवम में क्रिया स्नान, दशम में आचमन विधि, एकादश में अधर्मतर्पणविधि, द्वादश में गायत्री तर्पणविधि, त्रयोदश में तर्पण विधि, चतुर्दश में श्राद्ध के समय ब्राह्मणपरीक्षा एवं पङ्क्तिपावन ब्राह्मणों आदि के लक्षण, पञ्चदश में जन्म-मरण अशौच विधि, षोडश में द्रव्यशुद्धि, सप्तदश मे क्षत्रियादि वध प्रायश्चित्त एवं अष्टादश में अघमर्षण प्रकरण विशद रूप में वर्णित हैं।

शैली एवं विषय-सूची के अनुसार उक्त धर्मसूत्र गौतम एवं आपस्तम्ब से मिलता जुलता है। बहुत से स्थान पर गौतम एवं बोधायन के समान भी लगता है। शैली कौटलीय अर्थशास्त्र जैसी है एवं भाषा व्याकरणसम्मत है।

याज्ञवल्क्य ने स्वयं शंख-लिखित का नाम ग्रहण किया है। गद्यांश में सांख्यादि षड् दर्शनों का वर्णन है। पुराणवर्णित भूगोल एवं सृष्टिप्रक्रिया का भी उल्लेख है। प्राचीन आचार्यों में प्रजापति, अंगीरस, उशना, प्राचेतस, बृहद्गौतम आदि आचार्यों का मत उल्लिखित है। इन कारणों से काणे जी ने उक्त धर्मसूत्र का समय ई.पू. ३०० से १०० के बीच का माना है।

महाभारत की रचना ई.पू. पञ्चम शताब्दी द्वारा रचित मानने से, वहाँ उल्लिखित शंख-लिखित उपाख्यान के आधार पर उनकी स्मृति पूर्ववर्ती काल में प्रसिद्ध हुआ होगा। इस प्रकार महाभारत की व्याप्ति धर्मशास्त्र ग्रन्थों में हुई है।

**सन्दर्भ सूची**

१. महा. वन. अ १३६-१४०
२. महा. शान्ति. अ. २३/१८
३. वहीं अ. २३/२५

४. वहीं अ. २३/३६
५. वहीं अ. २३/४१
६. वहीं अ. २३/३
७. महा. अनु. अ. १३७
८. महा. उद्योग. अ. १०३
९. महा. विराट् अ. ३१/१६
१०. महा. उद्योग. अ. १७१/१५
११. पराशरस्मृति १/२४

## सहायक ग्रन्थसूची


१. धर्मशास्त्र का इतिहास, पी.वी. काणे, उ.प्र. हिन्दी संस्थान, लखनऊ, १९८०
२. पुराण विमर्श, बलदेव उपाध्याय, चौखम्बा विद्या भवन, वाराणसी, १९८७
३. Puranic Encyclopaedia Veltam mani MLBD, Delhi, 1987
४. महाभारत, गीताप्रेस, गोरखपुर, सं-२०५५
५. संस्कृत साहित्य का इतिहास, बलदेव उपाध्याय, शारदा संस्थान, वाराणसी, १९७३




# उत्कलीय लक्ष्मीपुराण का सांस्कृतिक परिदृश्य

अष्टादश महापुराण, अष्टादश उपपुराण, अष्टादश औपपुराण, के बाद अनेक स्थलपुराण एवं माहात्म्य लिखे गये हैं, जो पुराणवाङ्मय के कलेवर में वृद्धि करते हैं। इसके अतिरिक्त विभिन्न प्रान्तीय भाषा में लिखे गये आञ्चलिक पुराणों का योगदान भी कम नहीं हैं। पुराणवाङ्मय की श्रीवृद्धि में उत्कल का योगदान अत्यन्त महत्त्वपूर्ण है। संस्कृत भाषा में एकाम्रपुराण, एकाम्रचन्द्रिका, नीलाद्रिमहोदय, प्राचीमाहात्म्य, कपिलसंहिता एवं विरजा क्षेत्र माहात्म्य आदि के बाद या समानान्तर रूप में अनेक पुराण ओडिआ भाषा में लिखे गये हैं, जिनमें जगन्नाथ दास का ओडिआ भागवत, बलराम दास के दाण्डी रामायण, सारला महाभारत, नरसिंहपुराण, विलङ्का रामायण, दाड्र्ढ्याता भक्ति, भक्तिभागवत एवं लक्ष्मीपुराण आदि मुख्य हैं।

बलरामदासकृत लक्ष्मीपुराण जिसका पूर्णनाम है 'माणवसा लक्ष्मीपुराण' एक स्थलपुराण है जो श्री जगन्नाथ मन्दिर से सम्बद्ध रखता है। उत्कलीय परम्परा एवं लोक संस्कृति में महालक्ष्मी व्रत की एक स्वतन्त्र मान्यता है। श्रीजगन्नाथ महाविष्णु होने के कारण लक्ष्मी परम वैष्णवी, आद्याशक्ति एवं महामाया के रूप में पूजित होकर धन- धान्य, सौभाग्य, समृद्धि, ऐश्वर्य, सर्वविध सुख एवं सन्तानादि को प्रदान करती है।

श्रीतन्त्र के अनुसार महालक्ष्मी के अष्टविध रूप है—१. आदिलक्ष्मी, २. धनलक्ष्मी, ३. धान्यलक्ष्मी, ४. गजलक्ष्मी, ५. ऐश्वर्यलक्ष्मी, ६. विजयलक्ष्मी, ७. वीरलक्ष्मी एवं ८. सन्तानलक्ष्मी।

पुराणवाङ्मय में लक्ष्मी की उत्पत्ति के सम्बद्ध में अनेक प्रसङ्ग वर्णित हैं। सन्दर्भित लक्ष्मीपुराण की लक्ष्मी सागरतनया लक्ष्मी है, जिसका विवाह महाविष्णु (जगन्नाथ) से हुआ है। समुद्रतनया लक्ष्मी की उत्पत्ति इस प्रकार है । एकदा दुर्वासा ऋषि के शाप से देवगण श्रीहीन हो जाते हैं एवं मानव जैसे उनकी आयु में वृद्धि होती है। केश पक जाते हैं एवं चर्म में विकृति

आ जाती है। वे लोग श्रीहीन हो जाने के कारण स्वर्गलक्ष्मी अपने स्वरूप को महालक्ष्मी में विलीन कर देती हैं। तब देवगण परमपिता ब्रह्मा जी से मिलने के लिए सत्य लोक में जाते हैं, उनसे निराश होने के बाद महाविष्णु से अपने सौभाग्य को प्राप्त करने के लिए अनुरोध करते हैं। महाविष्णु के कहने से महालक्ष्मी क्षीरसागर की कन्या के रूप में जन्म लेती हैं। समुद्रमन्थन में निकले चतुर्दश रत्नों में लक्ष्मी अन्यतम हैं। लक्ष्मी का विवाह महाविष्णु से होता है, तब देवतागण अपने सौभाग्य को प्राप्त करते हैं।

श्रीमद्देवीभागवतपुराण के अनुसार महालक्ष्मी अपने शरीर से दो रूपों की सृष्टि करती हैं—एक रमा अन्य राधा। दोनों ही महाविष्णु को पति रूप में चाहती हैं। तब महाविष्णु अपने चतुर्भुज स्वरूप में रमा को एवं द्विभुज स्वरूप कृष्ण रूप में राधा को स्वीकार करते हैं।

उपपुराणों की गणना के क्रम में लक्ष्मीपुराण का नाम आता है, परन्तु इसका मूलरूप अब तक मेरे संज्ञान में नहीं आया है। डॉ. उपेन्द्र धल ने लक्ष्मी पर एक गवेषणापूर्ण पुस्तक लिखी है, जिसमें इसका भी उल्लेख है।

**ओडिआ लक्ष्मीपुराण के प्रणेता एवं उनका देश, काल**

ओडिआ दाण्डि रामायण के रचयिता बलरामदास इस ग्रन्थ के भी प्रणेता हैं। उत्कलीय परम्परा के अनुसार वे स्वयं बलराम के अवतार हैं, जिसका उल्लेख गोपबन्धुदास ने किया है—

**''हुए मो प्रतीति नीलाचल पति उत्कल बन्धु ठाकुर,**
**उत्कल कल्याणे युद्ध अभियाने जिणिले से काञ्चीपुर।**
**कविरूपे पुणि अवतरि वेनि जगन्नाथ बलराम,**
**धर्म कर्म दीक्षा साहित्य सुशिक्षा प्रचारि रखिल नाम[१]।।**

**हिन्दी अनुवाद**

ऐसी है प्रतीति नीलाचल पति उत्कल बन्धु ठाकुर।
उत्कल कल्याणे युद्ध अभियाने जीत लिया काञ्चीपुर।।
कवि के रूप में अवतार लिये जगन्नाथ बलराम।
धर्म, कर्मदीक्षा साहित्य शिक्षा के प्रचार से पाया नाम।।

